।। अथ ।।

# ऋषितर्पणी पूजा - विधिः

## (श्रावणी)


प्रकाशक :-

**श्री दुर्गा साहित्य भण्डार**

पो० बा० नं० १०९६, नेपाली खपड़ा, वाराणसी-१

प्रकाशक :
श्री दुर्गा साहित्य भण्डार
पोस्ट बाक्स नं. १०९६
नेपाली खपड़ा, वाराणसी- २२१००१
फोन नं० (०५४२) २३६७२१४

सं० २०६२

संस्करण - २००५

मूल्य : भा० रु० २०/-००

मुद्रक :
यू.पी. पेपर मार्ट
चौक, वाराणसी-२२१००१
फोन : २४१२०४८



# अथ श्रावणीस्नान-विधिः

तत्र श्रावणस्य पूर्णिमादिकाले प्रातः स्नानसन्ध्यादि नित्यकर्म विधाय गुरुः शिष्यगणैः सह ग्रामाद्बहिः प्राच्यामुदीच्यां वा नद्यादि रम्यं जलाशयं गत्वा तत्तीरे शुभ्रां यथादेशसम्भवां वा मृदम्, आर्द्रं गोमयं, भस्म, कुशान्, तिलाक्षतान्, सुरभीणि पुष्पाणि, दुर्वाङ्कुरापामार्गादि सर्वां स्नानसामग्रीं सम्पाद्य प्राङ्मुख उदङ्मुखो वा गुरुः शौचादियुक्तैः शिष्यैः सह देशकालौ सङ्कीर्त्य सर्वैः सह सङ्कल्पं कुर्यात्। यथा- आचम्य प्राणानायम्य ।। श्री-श्रीमन्महागणाधिपतये नमः। श्रीगुरुभ्यो नमः। श्रीसरस्वत्यै नमः । वेदाय नमः । वेदपुरुषाय नमः। इष्टदेवताभ्यो नमः। कुलदेवताभ्यो नमः। ग्रामदेवताभ्यो नमः। स्थानदेवताभ्यो नमः। वास्तुदेवताभ्यो नमः। एतत्कर्मप्रधानदेवताभ्यो नमः । सर्वेभ्यो देवेभ्यो नमः । सर्वेभ्यो ब्राह्मणेभ्यो नमः। अविघ्नमस्तु । सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः। लम्बोदरश्च विकटो विघ्ननाशो गणाधिपः । धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि

नामानि यः पठेच्छृणुयादपि । विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा । संग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते । शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ।। अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः। सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ।। सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके। शरण्ये त्र्यम्बके गौरि नारायणि नमोस्तु ते । वक्रतुण्ड महाकाय सूर्यकोटिसमप्रभ। निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ।। वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे। यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ।। गणनाथं नमस्कृत्य नमस्कृत्य पितामहम् । विष्णुं रूद्रं श्रियं देवीं वन्दे भक्त्या सरस्वतीम् । स्थानं क्षेत्रं नमस्कृत्य दिननाथं निशाकरम् । धरणीगर्भसंभूतं शशिपुत्रं बृहस्पतिम् ।। दैत्याचार्यं नमस्कृत्य सूर्यपुत्रं शनैश्चरम् । राहुं केतुं नमस्कृत्य यज्ञारम्भे विशेषतः ।। शक्रादिदेवताः सर्वानृषिंश्चैव तपोधनान् । गर्गं मुनिं नमस्कृत्य पर्वतं नारदं तथा ।। वसिष्ठं मुनिशार्दूलं विश्वामित्रं च गोभिलम् । अगस्त्यं च पुलस्त्यं च दशमित्रं पराशरम्।



भरद्वाजं च माण्डव्यं याज्ञवल्क्यं च गालवम् । अन्ये विप्रास्तपोयुक्ता वेदशास्त्रविचक्षणाः । तान् सर्वान् प्रणिपत्याहं शुभं कर्म समारभे ।। लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ।। अग्रतः श्रीनृसिंहश्च पृष्ठतो देवकीसुतः । रक्षतां पार्श्वयोर्देवौ भ्रातरौ राम-लक्ष्मणौ ।।
कुशयवतिलजलान्यादाय-ॐ स्वति श्रीमुकुन्दसच्चिदानन्दस्य ब्रह्मणोऽनिर्वाच्यमायाशक्तिविजृम्भिताविद्यायोगात् कालकर्मस्वभावाविर्भूतमहत्तत्वोदिताहङ्कारोद्भूतवियदादिपञ्चमहाभूतेन्द्रियदेवतानिर्मितेऽण्डकटाहे चतुर्दशलोकात्मके लीलया तन्मध्यवर्तिभगवतः श्रीनारायणस्य नाभिकमलोद्भूतसकललोकपितामहस्य ब्रह्मणः सृष्टिं कुर्वतस्तदुद्धरणाय प्रजापतिप्राथितस्य समस्तजगदुत्पत्तिस्थितिलयकारणस्य जगद्रक्षाशिक्षाविचक्षणस्य प्रणतपारिजातस्य अच्युतानन्तवीर्यस्य श्रीमद्भगवतो महापुरुषस्य अचिन्त्यापरिमितशक्त्याध्येयमानस्य महाजलौघमध्ये परिभ्रममाणानामनेककोटिब्रह्माण्डानामेकतमेऽव्यक्तमहदहङ्कारपृथिव्यप्तेजोवाय्वाकाशाद्यावरणैरावृते

अस्मिन् महति ब्रह्माण्डखण्डे आधारशक्तिश्रीमदादि वाराहदंष्ट्राग्रविराजिते कूर्मानन्त-वासुकितक्षककुलिककर्कोटकपद्ममहापद्मशङ्खाद्यष्टमहानागैर्ध्रियमाणे ऐरावत-पुण्डरीकवामनकुमुदाञ्जनपुष्पदन्तसार्वभौमसुप्रतीकाष्टदिग्गजप्रतिष्ठितानामतवितल-सुतलतलातलरसातलमहातलपाताललोकानामुपरिभागे भूर्लोकभुवर्लोकस्वर्लोक-महर्लोकजनलोकतपोलोकसत्यलोकाख्यसप्तलोकानामधोभागे चक्रवालशैलम-हावलयनागमध्यवर्तिनो महाकालमहाफणिराजशेषस्य सहस्रफणानां मणिमण्डल-मण्डिते दिग्दन्तिशुण्डोत्तम्भिते अमरावत्यशोकवती भोगवती सिद्धवती गान्धर्ववती काञ्च्यवन्त्यलकावती यशोवतीति पुण्यपुरीप्रतिष्ठिते इन्द्राग्नियमनिर्ऋतिवरूणवायुकुबेरे-शानाष्टदिक्पालप्रतिष्ठिते वरध्रुवाधरसोमपा-प्रभञ्जनानलप्रत्यूषप्रभासाख्याष्टवसुभि-र्विराजिते हरत्र्यम्बकरुद्रमृगव्याधापराजितकपालीभैरवशम्भुकपर्दिवृषाकपिबटुरूपा-ख्यैकादशरुद्रैः संशोभिते रुद्रोपेन्द्रसवितृधातृत्वष्ट्र्यमेन्द्रेशानभगमित्रपूषाख्यद्वादशा-दित्यप्रकाशिते यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाध्याष्टाङ्गनिरतवसिष्ठ-



बालखिल्यविश्वामित्रदक्षकात्यायनकौण्डिण्यगौतमाङ्गिरसपाराशर्यव्यासवाल्मीकशुक-शौनकभरद्वाजसनकसनन्दनसनातनसनत्कुमारनारदादिमुख्यमुनिभिः पवित्रिते लोकालो-काचलवलयिते लवणेक्षुरससुरासर्पिर्दधिक्षीरोदकयुक्तसप्तार्णवपरिवृते जम्बूप्ल-क्षशाल्मलिकुशक्रौञ्चशाकपुष्कराख्यसप्तद्वीपयुते इन्द्रकांस्यताम्रगभस्तिनागसौभ्य-गन्धर्वचारणभारतेतिनवखण्डमण्डिते सुवर्णगिरिकर्णिकोपेतमहासरोरुहाकारपञ्चा-शत्कोटियोजनविस्तीर्णभूमण्डले अयोध्या मथुरा माया काशी काञ्च्यवन्तिका द्वारावतीति सप्तपुरीप्रतिष्ठिते महामुक्तिप्रदस्थले शालग्रामशम्भलनन्दिग्रामेतिग्रामत्र-यविराजिते चम्पकारण्यवदरिकारण्यदण्डकारण्यार्बुदारण्यधर्मारण्यपद्मारण्यगु-ह्यारण्यजम्बुकारण्यविन्ध्यारण्यद्राक्षारण्यनहुषारण्यकाम्यकारण्यद्वैतारण्यनैमिषा-रण्यादीनां मध्ये सुमेरुनिषधकूटशुभ्रकूटश्रीकूटहेमकूटरजतकूटचित्रकूटत्रिकूट किष्किन्धश्वेताद्रिकूटहिमविन्ध्याचलानां हरिवर्षकिम्पुरुषवर्षयोश्च दक्षिणे नवसहस्रयोजनविस्तीर्णे भरतखण्डे मलयाचलसह्याचलविन्ध्याचलानां दक्षिणे

स्वर्णप्रस्थचण्डप्रस्थसूक्तिकआवन्तकरमणकमहारमणकपाञ्चजन्यसिंहल-लङ्का-शोकवत्यलकावतीसिद्धवतीगान्धर्ववत्यादिपुण्यपुरीविराजिते नवखण्डोपद्वीपमण्डिते दक्षिणावस्थितरेणुकाद्वयसूकरकाशीकाञ्चीकालिकालवटेश्वरकालञ्जरमहाकालेतिन-वोखरयुते द्वादशज्योतिर्लिङ्गगङ्गा (भागीरथी) गोदा (गौतमी) क्षिप्रायमुनासरस्वती नर्मदातापीपयोष्णीचन्द्रभागाकाबेरीमन्दाकिनीप्रवराकृष्णावेण्याभीमरथीतुङ्गभ-द्रामलापहाकृतमालाताम्रपर्णीविशालाक्षीवञ्जुलाचर्मण्वतीवेत्रवतीभोगवतीविशोका-कौशिकीगण्डकी वासिष्ठीप्रमदाविश्वामित्रीफल्गुनीचित्रकाश्यपीसरयूसर्वपापहारिणी-करतोयाप्रणीतावज्रावक्रगामिनीसुवर्णरेखाशोणाभवनाशिनीशीघ्रगाकुशवर्तिनीब्रह्मा-नन्दामहितनयेत्यनेकपुण्यनदीभिर्विलसिते ब्रह्मपुत्र सिन्धुनदादिषरमपवित्रजलविराजिते हिमवन्मेरुगोवर्धनक्रौञ्चचित्रकूटहेमकूटमहेन्द्रमलयसह्येन्द्रकील पारियात्राद्यनेकपर्वत-समन्विते मतङ्गमाल्यकिष्किन्धऋष्यशृङ्गेतिमहानगसमन्विते अङ्गवङ्गकलिङ्गकाश्मीर-काम्बोजसौवीरसौराष्ट्रमहाराष्ट्रमगधनेपालकेरलचोलपाञ्चाल गौडमालवमलयसिंह-



लद्रविणकर्नाटकललाटकरहाटवरहाटपानाटपाण्ड्यनिषधमागधआन्ध्रदशार्णव भोजकुरुगान्धारविदर्भविदेहबाल्हीकबर्बरकैकेयकोसलविराटशूरसेनकोङ्कण कैकटमत्स्यमद्रपारसिकखर्जूरयावनम्लेच्छजालन्धरेतिसिद्धवत्यन्यदेशविशेषभाषा-भूमिपालविचित्रिते इलावृतकुरुभद्राश्व केतुमालकिम्पुरुषरमणकहिरण्मयादिनव-वर्षाणां मध्ये भरतखण्डे वकुलचम्पकपाटलाब्जपुन्नागजातिकरवीररसालकह्लार-केतक्यादिनानाविधकुसुमस्तवकविराजिते कोकन्तहिरण्यशृङ्गकुब्जार्बुदमणिकर्णी-वटशालग्रामसूकरमथुरागयानिष्क्रमणलोहार्गलपोतस्वामिप्रभासबदरीतिचतुर्दशगुह्य-विलसिते जम्बुद्वीपे कुरुक्षेत्रादिसमभूमध्यरेखायाः पूर्वदिग्भागे कुलमेरोर्दक्षिणदिग्भागे विन्ध्यस्य उत्तरे देशे श्रीशैलस्येशानदेशे गङ्गागण्डक्योर्मध्ये मत्स्यकूर्मवराहनृसिंह-वामनपरशुरामरामकृष्णबुद्धकल्कीतिदशावताराणां मध्ये बौद्धावतारे गङ्गादिसरिद्भिः पाविते, एवं नवसहस्त्रयोजनविस्तीर्णभारतवर्षे निखिलजनपावनपरमभागवतोत्तमशौनकाः दिनिवासिते नैमिषारण्ये आर्यावर्तान्तर्गतब्रह्मावर्तैकदेशे सूर्यान्वयभूभृत्प्रतिष्ठिते

श्रीमन्नारायणनाभिकमलोद्भूतसकलजगत्स्रष्टुः परार्धद्वयजीविनो ब्रह्मणो द्वितीये परार्धे एकपञ्चाशत्तमे वर्षे प्रथममासे प्रथमपक्षे प्रथमदिवसे अह्नो द्वितीये यामे तृतीये मुहूर्ते रथन्तरादिद्वात्रिंशत्कल्पानां मध्ये अष्टमे श्वेतवाराहकल्पे स्वायम्भुवादिमन्वन्तराणां मध्ये सप्तमे वैवस्वतमन्वतन्तरे कृतत्रेताद्वापरकलिसंज्ञकानां चतुर्णां युगानां मध्ये वर्तमाने अष्टाविंशतितमे कलियुगे तत्प्रथमे विभागे (पादे) श्रीमन्नृपविक्रमार्कात् श्रीमन्नृपशालिवाहनाद्वा यथासंख्यागमेन चान्द्रसावनसौरनाक्षत्रादिप्रकारेणागतानां प्रभवादिषष्टिसंवत्सराणां मध्ये अमुकनाम्नि सम्वत्सरे उत्तरगोलावलम्बिनि श्रीमार्तण्डमण्डले अमुकर्तौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चन्द्रे अमुकस्थे सूर्ये अमुकस्थिते देवगुरौ शेषेषु ग्रहेषु यथायथास्थानस्थितेषु सत्सु एवं गुणविशेषेण विशिष्टायां शुभपुण्यतिथौ अमुक गोत्रस्य अमुकप्रवरस्य अमुकशर्मणो मम इह जन्मनि जन्मान्तरे वा बाल्ययौवनवार्धक्यावस्थासु वाक्पाणिपादपायूपस्थघ्राणरसनाचक्षुः



स्पर्शनश्रोत्रमनोभिश्चरितज्ञाताज्ञातकामाकाममहापातकोपपातकादिसञ्चितानां पापानां ब्रह्महननसुरापानसुवर्णस्तेयगुरुतल्पगमनतत्संसर्गरूपमहापातकानां बुद्धिपूर्वकाणां मनोवाक्कायकृतानां बहुकालाभ्यस्तानां उपपातकानां च स्पृष्टास्पृष्टसङ्करीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरणविहिताकरणकर्मलोपजनितानां रसविक्रयकन्याविक्रयहयविक्रयगोविक्रयखरोष्ट्रविक्रयदासीविक्रयाजादिपशुविक्रयस्वगृहविक्रयनीलीविक्रयाक्रेयविक्रयपण्यविक्रयजलचरादिजन्तुविक्रयस्थलचरादिविक्रयखेचरादिविक्रयसम्भूतानां निरर्थकवृक्षच्छेदनऋणानपाकरणब्रह्मस्वापहरणदेवस्वापहरणराजस्वापहरणपरद्रव्यापहरणतैलादिद्रव्यापहरणफलादिहरणलोहादिहरणनानावस्तुहरणरूपाणां ब्राह्मणनिन्दागुरुनिन्दावेदनिन्दाशास्त्रनिन्दापरनिन्दाभक्ष्यभक्षणाभोज्यभोजनाचोष्य चोषणालेह्यलेहनापेयपानास्पृश्यस्पर्शनाश्राव्यश्रवणाहिंस्यहिंसनावन्द्यवन्दनाचिन्त्यन्तिनायाज्ययाजनापूज्यपूजनरूपाणां मातृपितृतिरस्कारस्त्रीपुरुषप्रीतिभेदनपरस्त्रीगमनविधवागमनवेश्यागमनदासीगमन-

चाण्डालादिहीनजातिगमनगुदगमनरजस्वलागमनपश्वादिगमनरूपाणां कूटसाक्षित्व-पैशुन्यवादमिथ्यापवादम्लेच्छसंभाषणब्रह्मद्वेषकरणब्रह्मवृत्तिहरणवृत्तिछेदनपरवृत्तिहर-णरूपाणां मित्रवञ्चनगुरूवञ्चनस्वामिवञ्चनासत्यभाषणगर्भपातनपथितताम्बूलचर्वण-हीनजातिसेवनपरान्नभोजनगणान्नभोजनलशुनपलाण्डुगृञ्जन भक्षणतालवृक्षफल-भक्षणोच्छिष्टभक्षण मार्जारोच्छिष्टभक्षणपर्युषितान्नभक्षणरूपाणां पङ्क्तिभेदक-रणभ्रूण हिंसापशुहिंसाबालहिंसाद्यनेकहिंसोद्भूतानां शौचत्यागस्नानत्यागसन्ध्या-त्यागौपासनाग्नित्यागवैश्वदेवत्यागरूपाणां निषिद्धाचरणकुग्रामवास-ब्रह्मद्रोहगुरुद्रोहपितृमातृद्रोहपरद्रोहपरनिन्दात्मस्तुतिदुष्टप्रतिग्रहदुर्जनसंसर्गरूपाणां योगानवृषभयामहिषीयानगर्दभयानोष्ट्रयानाजयानभृत्याभरणस्वग्रामत्याग-गोत्रत्यागकुलत्यागदूरस्थमन्त्रणविप्राशाभेदनावन्दिताशीर्वादग्रहणपतित-सम्भाषणरूपाणां पतितजनपङ्क्तिभोजनाहः सङ्गमवृथामनोरथादि पापानां तथा-महापापोपपापाभ्यां नाना योनिषु यत्कृतम् । बालभावेन यत्पापं क्षुत्तृडर्थे च यत्



कृतम् । आत्मार्थे चैव यत्पापं परार्थे चैव यत् कृतम् । तीर्थेषु चैव यत् पापं गुर्ववज्ञाकृतं च यत् ।। रागद्वेषादिजनितं कामक्रोधेन यत् कृतम् । सिंहानिद्रादिजं पापं भेददृष्ट्या च यन्मया ।। देहाभिमानजं पापं सर्वदा यन्मया कृतम् । भूतं भव्यं च यत् पापं भविष्यं चैव गौतमि । शुष्कमार्द्रं च यत् पापं जानताऽजानताकृतम्। महल्लघु च यत् पापं तन्मे नाशय जाह्नवि।। ब्रह्महा मद्यपः स्तेयी तथैव गुरुतल्पगः। महापापानि चत्वारि तत्संसर्गी तु पञ्चमः।। अतिपातकमन्यच्च तन्न्यूनमुपपातकम्। गोवधो व्रात्यता स्तेयं ऋणानां चानपक्रियाः।। अनाहिताग्निता पण्यविक्रयः परिवेदनम्। इन्धनार्थे द्रुमच्छेदः स्त्रीहिंसौषधिजीवनम्।। हिंसायात्राविधानं च भृतकाध्यापनं तथा । प्रथमाश्रममारभ्य यत्किञ्चित् किल्विषं कृतम् ।। कृमिकीटादिहननं यत्किञ्चित् प्राणिहिंसनम् । मातापित्रोरशुश्रूषा तद्वाक्याकरणं तथा ।। अपूज्यपूजनं चैव पूज्यानां च व्यतिक्रमः । अनाश्रमस्थताग्न्यादिदेवा-शुश्रुषणं तथा ।। परकार्यापहरणं परद्रव्योपजीवनम् । ततो ज्ञानकृतं वापि कायिकं

वाचिकं तथा ।। मानसं त्रिविधं पापं प्रायश्चितैरनाशितम् । तस्मादशेषपापेभ्यस्त्राहि त्रैलोक्यपावनि ।। निष्पापोऽभ्यधुना देवि प्रसादात् तव नान्यथा ।। इत्यादि प्रकीर्णपातकानाम् एतत्कालपर्यन्तं सञ्चितानां लघुस्थूलसूक्ष्माणां च निःशेषपरिहारार्थं दशावरान् दशपरान् आत्मना सहितान् एकविंशति पुरुषानुद्धर्तुं ब्रह्मलोकावधिपञ्चाशत्कोटियोजनविस्तीर्णेऽस्मिन्भूमण्डले सप्तर्षिमण्डलपर्यन्तं बालुकाभिः कृतराशेः वर्षसहस्रावसाने एकैकवालुकापकर्षक्रमेण सर्वराश्यपकर्षसंमितकालपर्यन्तं ब्रह्मलोके ब्रह्मसायुज्यताप्राप्त्यर्थं कुरुक्षेत्रादिसर्वतीर्थेषु स्नानपूर्वकं सहस्रगोदानजन्यफल प्राप्त्यर्थं तथा मम समस्तपितॄणां आत्मनश्च विष्णवादिलोकप्राप्तये अधीतानां अध्येष्यमाणानां चाध्यायानां स्थापनविच्छेदक्रोशघोषण दन्तविवृतिदुर्वृत्तद्रुतोच्चारितवर्णानां गलोपलम्बितविवृतोच्चारितवर्णानां श्लिष्टास्पष्टवर्णविघट्टनादिभिः पठितानां श्रुतीनां यद्यातयामत्वं तत्परिहारार्थम् अष्टत्रिंशदनध्यायाध्ययने रथ्यासञ्चरतः शूद्रस्य शृण्वतोऽध्ययने म्लेच्छान्तजातैः शृण्वतोऽध्ययने अक्षरस्वरानुस्वारपदच्छेदकण्डिका



व्यञ्जनह्रस्वदीर्घप्लुतकण्ठतालुमूर्धन्योष्ठ्यदन्त्यनासिकानुनासिकरेफजिह्वामूलीयोपध्मानीयोदात्तानुदात्तस्वरितादीनां व्यत्ययेनोच्चारे माधुर्याक्षरव्यक्तिहीनत्वाद्यनेकप्रत्यवायपरिहारकपूर्वकं सर्वस्य वेदस्य सवीर्यत्वसंपादनद्वारा यथावत्फलप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं देवब्राह्मणसवितृसूर्यनारायणसन्निधौ गङ्गाभागीरथ्यायाम् अमुकतीर्थे वा प्रवाहाभिमुखं स्नानमहं करिष्ये ।। इति सङ्कल्प्य[१] गुरुः शिष्यैः सह 'उभाकवी' इत्युच्चैः पठेत् । तद्यथा- ॐ उभाकवीयुवा यो नो धर्मः परापतत् । परिसख्यानि धर्मिणो विसख्यानि विसृजामहे ।। इति मन्त्रं पठित्वा यथाक्रमेण सर्वे गुरोरभिवादनं कुर्युः। ततः स्नानानुज्ञां प्रार्थयेत् ।। यथा- -नमोस्तु देवदेवाय शितिकण्ठाय वेधसे। रुद्राय चापहस्ताय दण्डिने चक्रिणे नमः।। सरस्वती च गायत्री वेदमाता गरीयसी। सन्निधात्री भव त्वं च सर्वपापप्रणाशिनी।। यद्वा सागरनिर्घोषदण्डहस्तासुरान्तक । जगत्स्रष्टुर्जगन्मित्र नमामि त्वां सुरान्तक ।। तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम।

१. यदि यजमानो वेदाधिकारी न स्यात् तर्हि तेनायं संकल्पः पुराणोक्तविधिना कार्यः।

भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ।। नमानि गङ्गे तव पादपङ्कजं, सुरासुरैर्वन्दित दिव्यरूपम् । भुक्तिं च मुक्तिं च ददासि नित्यम्, भावानुसारेण सदा नराणाम्[१] ।। उत्तिष्ठन्तु महाभूता ये भूता भूमिवासिनः। भूतानामविरोधेन स्नानकर्म समारभे ।। अपसर्पन्तु ते भूता ये भूतास्तीर्थदूषकाः। ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया।। पुष्कराद्यानि तीर्थानि गङ्गाद्याः सरितस्तथा। आगच्छन्तु पवित्राणि स्नानकाले सदा मम।। अपामधिपतिस्त्वं च तीर्थेषु वसतिस्तव। वरुणाय नमस्तुभ्यं स्नानानुज्ञां प्रपच्छ मे । अधिष्ठात्र्यश्च तीर्थानां तीर्थेषु विचरन्ति या । देवतास्ताः प्रयच्छन्तु स्नानाज्ञां मम सर्वदा।। गङ्गे च यमुने चैव गोदावरि सरस्वति। नर्मदे सिन्धो कावेरि जलेऽस्मिन् सन्निधिं कुरु ।। ततस्तीर्थाभिमन्त्रणम् - ॐ उरु ꣳ हि राजा वरुणश्चकार सूर्य्याय पन्थामन्नवेत वाऽउ । अपदे पादा प्प्रतिधावते करुता-पवक्ता हृदया विधश्चित् । नमो वरुणायाभिष्टिटतो वरुणस्य पाशः।।१।। इति

१. इमं मन्त्रं स मुच्चार्य तीर्थस्नानं समाचरेत् । अन्यथा तत्फलस्यार्धं तीर्थेशो हरति ध्रुवम् ।



मन्त्रेण न्युब्जाञ्जलिहस्तेन तोयमभिमन्त्रयेत् ।। जलावर्तनम् - ॐ ये ते शतं वरुणं ये सहस्रं यज्ञियाः पाशा वितता महान्तः। तेभिर्नोऽअद्य सवितोतद् विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्क्काः ।।२।। इति मन्त्रेण जलं दक्षिणहस्ताङ्गुलिभिर्द-क्षिणावर्तं त्रिवारमावर्तयेत् (भ्रामयेत्)।। पूर्णाञ्जलिनापो ग्रहणम् - ॐ सुमित्रिया नऽआपऽओषधयः सन्तु ।।३।। तीर्थतटे जलप्रक्षेपणम् - दुर्मित्रियास्तस्मै सन्तु योस्म्मान्द्वेष्टि यञ्चव्वयन्द्विष्मः ।।४।। मृत्तिकालेपनम् - ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्त पाꣳसुरे स्वाहा ।।५।। अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे । उद्धृतासि वराहेण कृष्णेन शतबाहुना ।। मृत्तिके ब्रह्मपूतासि काश्यपेनाभिवन्दिता । त्वया हतेन पापेन गच्छामि परमां गतिम् ।। मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् । इति संप्रार्थ्य तस्या भागद्वयं कृत्वा प्रथमभागं वामहस्तेन नाभेरधः कटिप्रदेशं वस्तिं ऊरू जङ्घे चरणौ करौ च प्रत्येकं तूष्णीं त्रिंस्त्रिरनुलिप्य हस्तं प्रक्षाल्याचम्य द्वितीयभागं दक्षिणहस्तेन ललाटादिनाभिपर्यन्तानि

गात्राण्युपले-पयेत्।। ततो नाभिमात्रं तीर्थजलं प्रविश्य सूर्याभिमुखं स्नायात् - ॐ आपोऽ-अस्मान्मातरः शुन्धयन्तु घृतेन नो धृतप्प्वः पुनन्तु । विश्श्व ꣳ हि रिप्रम्प्रवहन्ति देवीः।।६।। इति मन्त्रेण निमज्य पुनः ॐ उदिदाभ्यः शुचिरापूतऽ एमि।।७।। इति मन्त्रेण द्वितीयवारं निमज्य पुनस्तूष्णीं निमज्योन्मज्याचमेत् ।। गोमयलेपनम्- अग्रमग्रं चरन्तीनामोषधीनां वने वने । तासां वृषभपत्नीनां पवित्रं कायशोधनम् ।। तन्मे रोगांश्च शोकांश्च पापं मे हर गोमय । इति मन्त्रेण गोमयमभिमन्त्र्य - ॐ मा नस्तोके तनये मा नऽआयुषि मा नो गोषु मा नोऽअश्वेषु रीरिषः। मा नो ब्विरान्नुद्र भाविनो व्वधीर्हविष्मन्तः सदमित्त्वा हवामहे ।।८।। इति मन्त्रेण सोदकं गोमयं सूर्याय दर्शयित्वा मृत्तिकालेपनवल्ललाटादिपादपर्यन्तानि अङ्गानि त्रिवारमनुलिप्य स्नायात् ।। भस्मलेपनम् - ॐ जलमिति भस्म । स्थलमिति भस्म । व्योमेति भस्म । सर्व ꣳ हवा इदं भस्म । मन एतानि चक्षूंषि भस्मानीति। ॐ प्प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने । स ꣳ सृज्ज्य



मातृभिष्ट्वञ्ज्योतिष्मान्पुननादः।।९।। इति मन्त्रेण दक्षिणहस्तेन नाभित उर्ध्वं ललाटाद्यङ्गेषु भस्मलेपनं कृत्वा।। मार्जनम् - ॐ इमम्मे व्वरुणश्श्रुधीहवमद्या च मृडय । त्वामवस्यु-राचके।।१०।। तत्त्वायामि ब्ब्रह्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।। अहेडमानो व्वरुणे हवोद्ध्युरुश ꣳ समानऽआयुः प्प्रमोषीः ।।११।। त्वन्नोऽअग्ने व्वरुणस्य विद्वान् देवस्य हेडोऽअवयासिसीष्ठ्ठाः। यजिष्ठ्ठो व्वह्नितमः शोशुचानो व्विश्श्वाद्द्वेषा ꣳ सि प्प्रमुमुग्ग्ध्यस्म्मत् ।।१२।। ॐ सत्त्वन्नोऽअग्ने वमो भवोती नेदिष्ठ्ठोऽअस्याऽउषसो व्व्युष्टौ । अवयक्ष्व नो व्वरुण ꣳ रराणो व्वीहि मृडीक ꣳ सुहवो नऽएधि ।।१३।। मापोमौषधीर्हि ꣳ सीर्द्धाम्मो धाम्म्नो राजँस्ततो व्वरुण नो मुञ्च । यदाहुरग्घ्न्याऽइति व्वरुणेति शयामहे ततो ब्वरुण नो मुञ्च ।।१४।। उदुत्तमं व्वरुणपाशमस्म्मदवाधमं ब्विमध्यम ꣳ श्श्रथाय। अथाव्वयमादित्य व्रते तवानागसोऽअदितये स्याम ।।१५।। मुञ्चन्तु मा शपत्थ्यादथो वरुण्यादुत। अथो यमस्य पड्वीशात्सर्व्वस्माद्देवकिल्विषात् ।।१६।।

अवभृथमिचुम्पुणनिचेरुरसि निचुम्पुणः। अवदेवैर्द्देवकृतमेनोयासिषमव मर्त्त्यैर्म्मर्त्त्यकृतम्पुरुराव्णो देवरिषस्पाहि।।१७।। इति मन्त्रैः सर्वाङ्गानि मार्जयित्वा पश्चात्तूष्णीं स्नात्वाऽऽचम्य, पुनर्दर्भैर्मार्जनम् - ॐ आपो हिष्ठ्ठा मयोभुवस्तानऽऊर्ज्जे दधातन । महे रणाय चक्षसे ।।१८।। यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः।।१९।। तस्म्माऽअरङ्गमाम वो यस्य क्षयाय जिन्वथ । आपो जन यथा च नः ।।२०।। इदमापः प्प्रवहतावद्यञ्च मलञ्च यत् । यच्चाभिदुद्द्रोहामृतं य्यच्च शपेऽअभिरूणम् । आपो मा तस्म्मादेनसः पवमानश्च मुञ्चतु ।।२१।। हविष्म्मतीरिमाऽ आपो हविष्म्माँ २।। आविवासति। हविष्मान्देवोऽअद्ध्वरो हविष्माँ २।। ऽअस्तु सूर्य्यः।।२२।। देवीरापोऽअपान्नपाद्यो वऽऊर्म्मिर्हविष्य्यऽइन्द्रिया- वान्मदिन्तमः । तन्देवेभ्भ्यो देवत्रादत्त शुक्क्रपेभ्भ्यो येषाम्भागस्त्थ स्वाहा ।।२३।। कार्षिरसि समुद्द्रस्यत्त्वा क्षित्त्याऽउन्नयामि । समापोऽ अद्भिरग्गमत समोषधीभिरोषधीः ।।२४।। अपो देवामधु मतीर-



गृभ्भ्णन्नूर्जस्वती राजस्वश्चितानाः ।। याभिर्म्मित्रा- वरुणावभ्भ्यषिञ्चन्न्याभिरिन्द्रम- नयन्नत्त्यरातीः ।।२५।। द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव । पूतम्पवित्त्रेणेवाज्ज्यमापः शुन्धन्तु मैनसः ।।२६।। शन्नो देवीरभिष्ट्टयऽआपो भवन्तु पीतये । शं य्योरभिस्त्रवन्तु नः।।२७।। अपा छं रसमुद्द्वयस छं सूर्य्ये सन्त छं समाहितम् । अपा छं रसस्य यो रसस्तं व्वो गृह्णाम्म्युत्तममुपयामगृहीतो- सीन्द्रायत्त्वाजुष्ट्टङ्गृह्णाम्म्येष ते य्योनिरिन्द्रायत्त्वा जुष्ट्टतमम् ।।२८।। अपो देवीरुपसृजमधुमतीरयक्ष्माय प्प्रजाभ्भ्यः । तासामात्थानादुज्जिहतामोषधयः सुपिप्पलाः।।२९।। पुनन्तु मा पितरः सोम्म्यासः पुनन्तु मा पितरः सोम्म्यासः पुनन्तु मा पितामहाः पुनन्तु प्प्रपितामहाः । पवित्त्रेण शतायुषा।।३०।। पुनन्तु मा पितामहाः पुनन्तु प्प्रपितामहाः । पवित्त्रेण शतायुषा विश्श्वमायु व्व्यश्नवै ।।३१।। अग्नऽआयू छं षि पवस आसुवोर्ज्जमिषञ्चनः । आरे बाधस्व दुच्छुनाम् ।।३२।। पुनन्तु मा देवजनाः पुनन्तु मनसा धियः। पुनन्तु विश्श्वा भूतानि जातवेदः पुनीहि

मा ।।३३।। पवित्रेण पुनीहि मा शुक्क्रेण देव दीद्यत् । अग्ने क्क्रत्त्वा क्क्रतूऽ-
रनु ।।३४।। यत्ते पव्वित्रमचिष्ष्यग्ने व्विततमन्तरा। ब्ब्रह्मा तेन पुनातु मा ।।३५।।
पवमानः सोऽअद्य नः पव्वित्त्रेण व्विचर्षणिः। यः पोता स पुनातु मा ।।३६।।
उभाब्भ्यान्देवसवितः पवित्रेण सवेन च ।माम्पुनीहि व्विश्श्वतः ।।३७।। व्वैश्वदेवी
पुनती देव्व्यागादृद्यस्यामिमा बह्व्यस्तन्न्वो व्वीत पृष्ठ्ठाः। तया मदन्तः सधमादेषु
व्वय ꣳ स्याम पतयोरयीणाम् ।।३८।। इति मन्त्रैः सजलेन कुशत्रयेण
नाभिदक्षिणपार्श्वमारभ्य शिरो नीत्वा नाभिवामपार्श्वपर्यन्तं प्रदक्षिणमानं मार्जयित्वा
पश्चादुदकं स्पृशेत् ।। ततः- ॐ चित्पतिर्म्मा पुनातु देवो मा सविता पुनात्वच्छिद्रेण
पवित्रेण सूर्य्यस्य रश्मिभिः । तस्य ते पवित्रपते पवित्त्रपूतस्य यत्कामः पुनेतच्छ-
केयम् ।।३९।। इति मन्त्रेण नाभेरुर्ध्वं मार्जयेत् ।। ॐ व्वाक्पतिर्म्मा
पुनात्त्वच्छिदद्रेण पबित्त्रेण सूर्य्यस्य रश्मिभिः। तस्य ते पवित्त्रपते पवित्त्रपूतस्य
यत्कामः पुने तच्छकेयम् ।।४०।। इति मन्त्रेण नाभेरधो मार्जयेत् ।। ॐ



देवोमा सविता पुनात्त्वच्छिदद्रेण पवित्त्रेण सूर्य्यस्य रश्मिभिः। तस्य ते पव्वित्त्रपते
पवित्त्रपूतस्य यत्त्कामः पुनेतच्छकेयम् ।।४१।। इति मन्त्रेण सर्वाङ्गे मार्जयेत् ।
ततः- ॐ भूः पुनातु । ॐ भुवः पुनातु । ॐ स्वः पुनातु । ॐ महः पुनातु।
ॐ जनः पुनातु । ॐ तपः पुनातु । ॐ सत्यं पुनातु । ॐ तत्सवितुर्व्वरेण्यं०
सर्वं पुनातु ।। इति कुशैर्मार्जयित्वा ।। अपामार्गेण मार्जनम् - अषाघमपकिल्वि-
षमपकृत्त्यामपोरपः। अपामार्ग्गत्त्वमस्म्मदपदुःष्ष्वप्प्न्य ꣳ सुव ।।४२।। इति
मन्त्रेण अपामार्गैस्त्रिभिर्मार्जयेत् ।। ततः दूर्वाङ् कुरेण मार्जनम् - ॐ काण्डात्त्काण्डा
त्प्ररोहन्ती परुषः परुषस्प्परि । एवा नो दूर्व्वे प्प्रतनु सहस्त्रेण शतेन च ।।४३।।
इति मन्त्रेण दूर्वाभिस्त्रिभिर्मार्जयेत् ।। अघमर्षणम् - वक्ष्यमाणषट्पक्षाणामन्यतमे-
नान्तर्जले मग्नोऽनुच्छ्वसन्नघमर्षणं कुर्यात् ।। तद्यथा- ॐ द्रुपदादिव मुमुचानः
स्विन्नः स्नातो मलादिव । पूतम्पवित्त्रेणेवाज्ज्यमापः शुन्धन्तु मैनसः ।।४४।।
इति वा त्रिः पठेत् ।। ॐ आयङ्गौः पृश्निरक्क्रमीदसदन्मातरम्पुरः । पितरञ्च

प्रयन्त्स्वः ।।४५।। इति वा त्रिः पठेत् ।। सशिरसं प्राणायामं वा त्रिः पठेत् ।। यथा- ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम् ॐ तत्सवितु० स्वरोम् । ॐ इति वा त्रिः पठेत् ।। यद्वा परमात्मानं विष्णुं शेषशायिनं सायुधं सुश्रीकमेकाग्रमनसाध्यायेत् । एवं स्नानं कृतं स्यात् ।।

*ततः स्नानाङ्गतर्पणम्*-पूर्वाभिमुखः सन् कुशत्रयं गृहीत्वा तदग्रैः सव्येन देवतीर्थेन देवेभ्य एकैकमञ्जलिं दद्यात् ।। ॐ ब्रह्मादयो देवास्तृप्यन्ताम् । ॐ भूर्देवास्तृप्यन्ताम्। भुवर्देवास्तृप्यन्ताम् ।। ॐ स्वर्देवास्तृ० । ॐ भूर्भुवःस्वर्देवास्तृ० । तत उदगग्रान् कुशान् धृत्वा तदग्रैर्निवीत्या प्रजापतितीर्थेन, ऋषिभ्यो द्वौ द्वावञ्जली देयौ ।। ॐ सनकादिद्वैपायनादयः ऋषयस्तृप्यन्ताम् । ॐ भूर्ऋषयः स्तृ० । ॐ भुवर्ऋषयस्तृ०। स्वर्ऋषयस्तृ० । ॐ भूर्भुवः स्वर्ऋषयस्तृ० । ततः पितृतर्पणे भुग्नान्दक्षिणाग्रमूलान् दर्भान् धृत्वाऽपसव्येन पितृतीर्थेनोङ्कारपूर्वकं पितृभ्यस्त्रीँ स्त्रीन्नञ्जलीन् दद्यात् ।। ॐ कव्यवाडनलादयः पितरस्तृप्यन्ताम् । ॐ भूः पितरस्तृ० । ॐ भुवः



पितरस्तृ० । ॐ स्वः पितरस्तृ० । ॐ भूर्भुवः स्व पितरस्तृप्यन्ताम् ।। ततः सव्येन आचम्य यक्ष्मतर्पणम् - यन्मया दूषितं तोयं शरीरमलसम्भवात् । तस्य पापस्य शुद्ध्यर्थं यक्ष्मै तत्ते तिलोदकम् ।। इति मन्त्रेण तीर्थतटे तिलमिश्रं जलाञ्जलिं निक्षिपेत् ।। लतादिकेषु शिखोदकत्यागः- लतागुल्मेषु वृक्षेषु पितरो ये व्यवस्थिताः। ते सर्वे तृप्तिमायान्तु मयोत्सृष्टैः शिखोदकैः इति मन्त्रेण स्वदक्षिणभागे शिखाग्रं निष्पीडयेत् ।।

ततः, धौतवाससीं परिधाय दर्भासना प्राङ्मुख उदङ्मुखो वा उपविश्य भस्मगोपीचन्दनादि धृत्वा पवित्रपाणिः, आचम्य मध्याह्नसन्ध्यां कृत्वा सूर्यपूजनं सूर्योपस्थानं कुर्यात् ।। सूर्यपूजनम् - ॐ उदुत्त्यञ्ञातवेदसन्देवं व्वहन्ति केतवः दृशे व्विश्श्वाय सूर्य्यम् ।। इति मन्त्रेण सूर्यं गन्धाक्षतपुष्पैः संपूज्यार्घं दत्त्वा सूर्यमुदीक्षन् - सूर्योपस्थानम् - ॐ उद्द्वयन्तमसस्प्परि स्वः पश्यन्तऽउत्तरम् । देवन्देवत्रा सूर्य्यमगन्मज्ज्योतिरुत्तमम् ।।१।। उदुत्त्यञ्जातवेदसन्देवं वहन्ति केतवः।

दृशे व्विश्वाय सूर्य्यम् ।।२।। चित्रन्देवानामुदगादनीकञ्चक्षुर्म्मित्रस्य व्वरुणस्याग्नेः। आप्प्राद्यावापृथिवीऽअन्तरिक्ष ꣳ सूर्य्य आत्मा जगतस्तस्त्थुषश्श्च ।।३।। तच्चक्षुर्द्देव-हितम्पुरस्ताच्छुक्क्रमुच्चरत् । पश्येम शरदः शतञ्जीवेम शरदः शत ꣳ शृणुयाम शरद्रः शतम्प्प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतम्भूयश्च शरदः शतात् ।।४।। नमः सवित्रे जगदेकचक्षुषे, जगत्प्रसूतिस्थितिनाशहेतवे ।। त्रयीमयाय त्रिगुणात्मधारिणे, विरञ्चिनारायणशङ्करात्मने ।।१।। इति सूर्यं प्रदक्षिणीकृत्य नमस्कृत्योपविशेत् ।।

*अथ ब्रह्मयज्ञप्रयोगः* - आचम्य प्राणानायम्य पवित्रपाणिर्भूत्वा सङ्कल्पः - ॐ अद्य पूर्वोच्चारित एवं गुणविशेषणविशिष्टायां शुभपुण्यतिथौ ममाऽत्मन श्रुतिस्मृति-पुराणोक्तफलप्राप्त्यर्थं- ॐ तत्सत् श्रीपरमेश्वरप्रीत्यर्थं यथाशक्ति ब्रह्मयज्ञेनाहं यज्ञे। अथातो ब्रह्मयज्ञं व्याख्यास्यामः- इषेत्वादिषु मन्त्रेषु खं ब्रह्मान्तेषु दशप्रणव सहितेषु याः क्रियास्तत्र विवस्वानृषिः प्रजापतिर्देवता सर्वाणि छन्दा ꣳ सि सर्वाणि



सामानि प्रतिलिङ्गोक्ता देवता ब्रह्मयज्ञे विनियोगः ।। न्यासाः- ॐ गौतमभारद्वाजा-भ्यां नमः नेत्रयोः । ॐ विश्वामित्रजमदग्निभ्यां नमः श्रोत्रयो । ॐ वसिष्ठ-कश्यपाभ्यां नमः नासिकयोः । ॐ अत्रये नमः वाचि। ॐ गायत्र्यग्निभ्यां नमः शिरसि । ॐ उष्णिक्सवितृभ्यां नमः ग्रीवायाम् । ॐ बृहतीबृहस्पतिभ्यां नमः अनुके = हनौ। ॐ बृहद्रथन्तरद्यावापृथिवीभ्यां नमः बाह्वोः । ॐ त्रिष्टुविन्द्रा-भ्यां नमः नाभौ । ॐ जगत्यादित्याभ्यां नमः नाभौ । ॐ जगत्यादित्याभ्यां नमः श्रोण्योः । ॐ अतिच्छन्दाप्रजापतिभ्यां नमः लिङ्गे। ॐ यज्ञायज्ञियवैश्वानराभ्यां नमः गुदे। ॐ अनुष्टुब्विश्वेभ्यो देवेभ्यो नमः ऊर्वोः। ॐ पङ्क्तिमरुद्भ्यो नमः जान्वोः। ॐ द्विपदाविष्णुभ्यां नमः पादयोः । ॐ विच्छन्दावायुभ्यां नमः नासापुटस्थप्राणेषु । ॐ न्यूनाक्षराच्छन्दोभ्यो नमः सर्वाङ्गेषु । एवमेवाङ्गानि योजयित्वा वेदभयः सम्पद्यते । नकुतश्चिद्भयं विन्दते । शापानुग्रहसामर्थ्यं ब्राह्मं तेजश्च वर्धते। स्वर्गलोकं मुरं साधनम् । धर्मार्थकाममोक्षस्य च ।तस्य दारिद्र्यदुःखशोकरोगभयं

न भवति । ऋषिर्देवता छन्दा ꣳसि विदित्वा । ऋङ्मयो यजुर्मयः साममथोऽथर्व-मयोऽमृतमयो विष्णुरिदं कात्यायनस्य च ।। वामहस्ततले कुशपवित्रे 'द्वौ दर्भौ' कृत्वा तदुपरि दक्षिणहस्तम् अधोमुखं कृत्वा । ॐ भूर्भुवः स्वः तत्सवितु० । ॐ इषेत्त्वोर्ज्जेत्त्वा व्वायवस्त्थदेवो वः सविता प्प्रार्प्पयतु श्श्रेष्ठ्ठतमाय कर्म्मणऽ आप्प्यायदध्ध्वमग्घ्न्याऽइन्द्राय भागम्प्रजावतीरनमीवाऽअयक्ष्मा मा वस्तेनऽईशतमाघश ꣳसो दध्रुवाऽअस्मिन्न्गोपतौ स्यात बह्वीर्य्यजमानस्य पशून्पाहि । व्वसोः पवित्रम्।। हिरण्मयेन पात्रेण सत्त्यस्यापिहितम्मुखम् । योसावादित्त्ये पुरुषः सोसावहम्। ॐ खम्ब्रह्म । व्रतमुपैख्यनन्तरेणाहवनीयञ्च गार्हपत्यञ्च पाङ्क्तिष्ठन्नपऽउपस्पृशति। तद्यदपऽउपस्पृशत्यमध्यो वै पुरुषो यदनृतम्वदतितेन पूतिरन्तरतो मेध्या वाऽआपो मेध्यो भूत्वा व्रतमुपायानीति पवित्रेम् वाऽआपः पवित्रपूत्रो व्रतमुपायानीति तस्माद्धाऽ-अपऽउपस्पृशति ।।१।। सोग्निमेवाभीक्षमाणो व्रतमुपैति ।। ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते । ॐ खं ब्रह्म । ॐ



खं पुराणम् । ॐ वायुरेव खमिति हस्माह कौरव्यायणीपुत्रो वेद यं ब्राह्मणा विदुर्वेदेन न यद्वेदितव्यम् ।। ॐ प्राश्नीपुत्रादासुरिवासिनः प्राश्नोपुत्रऽआसुरायणा-दासुरायणऽआसुरेरासुरिर्याज्ञवल्क्याद्याज्ञवल्क्यऽउद्दालकादुद्दालकोऽरुणादरुण-ऽउपवेशेरुपवेशिः कुश्रेः कुश्रीर्वाजश्रवसो वाजश्रवाजिह्वावतो बाध्योगाज्जिह्वावान् बाध्योगोऽसिताद्वार्षगणादसितो बार्षगणो हरितात् कश्यपाद्धरितः कश्यपः शिल्पात्कश्यपाच्छिल्पः कश्यपः कश्यपान्नैध्रुवेः कश्यपो नैध्रुविर्व्वाचो वागम्भिण्याऽ अम्भिण्यादित्यादात्यानीमानि शुक्लानि यजू ꣳषि वाजसनेयेन याज्ञवल्क्येना-ख्यायन्ते।। ॐ अग्निमीड़े पुरोहितं यज्ञस्य देवमृत्वजम् । होतारं रत्नधातमम् ।। ॐ अग्नऽआयाहि वीतये गृणानो हव्यदातये । निहोता सत्सि बर्हिषि।। ओं शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये । शं य्योरभिस्त्रवन्तु नः।। अथानुवाकान् वक्ष्यामि। मण्डलं दक्षिणमक्षिहृदयम् । अथ शिक्षा प्रवक्ष्यामि। अथातोऽधिकारः फलयुक्तानि कर्माणि। अथातो गृह्यस्थालीपाकानां कर्म। वृद्धिरादैच् । समाम्नायः समाम्नातः।

मयरसतजभनलगसंमितम् । पञ्चसम्वत्सरमयं युगाध्यक्षम् । गौःग्मा। अथातो धर्मजिज्ञासा। अथातो ब्रह्मजिज्ञासा । योगीश्वरं याज्ञवल्क्यम् । नारायणं नमस्कृत्य। इति विद्यातपोयोनिरयोनिविष्णुरीडितः । वाग्यज्ञेनार्चितो देवः प्रीयतां मे जनार्दनः ।। एवं ब्रह्मयज्ञं विधाय पाण्योर्गृहीतकुशानां कुशपवित्रस्य च उत्तरस्यां त्यागं कुर्यात्।। अर्पणम् - अनेन ब्रह्मयज्ञाख्येन कर्मणा श्रीभगवान् परमेश्वरः प्रीयतां न मम।। ॐ तत्सद् ब्रह्मार्पणमस्तु ।। यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ।। ॐ अच्युताय नमः ओं अच्युताय नमः ओं अच्युताय नमः। चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ।। ओं विष्णवे नमः।। इति ब्रह्मयज्ञः।। ततो देवर्षिमनुष्य-पितृतर्पणं च कुर्यात् ।। *इति श्रावणीस्नानविधिः।।*

*अथ कलशस्थापविधिः* -वेद्या ईशानदिग्भागेऽअव्रणदध्यक्षतादिभूषितं कलशं धान्योपरिस्थापयेत् । तत्प्रकारश्च भूरसि इति भूमिशोधनम्- ओं भूरसिभूमिरस्यदितिर-



सिव्विश्वधायाव्विश्वस्य भुवनस्यधर्त्री । पृथिवींय्यच्छ पृथिवीदृ ६ हपृथिवीम्माहि ६ सीः।।१।। धान्यमसि इति धान्यं स्थापयेत्- धान्यमसिधिनुहिदेवान्प्राणायत्वो-दानायत्वाव्यानायत्वा दीर्घामनुप्रसितिमायुषेधान्देवोवः सविताहिरण्यपाणिः प्रतिगृब्भ्णात्वच्छिद्रेणपाणिना ।।२।। आजिघ्रकलशम् इति धान्योपरि अव्रणं कलशं स्थापयेत्- ओं आजिघ्र कलशम्मह्यात्वाविशन्त्विन्दवः । पुनरूर्ज्जा-निवर्त्तस्वासानः सहस्त्रन्धुक्ष्वोरुधारापयस्वतीः पुनर्म्माविशताद्द्रयिः ।।३।। वरुणस्योत्तम्भनमिति तीर्थादिजलं कलशे प्रक्षिपेत्- ओं व्वरुणस्योत्तम्भनमसिवरुणस्य स्कम्भसर्ज्जनीस्थोव्वरुणस्यऽऋतसदनमसिव्वरुणस्यऽऋतसदनमासीद ।।४।। याऽओषधीः इति सर्वौषधीः प्रक्षिपेत्- ओं याऽओषधीः पूर्व्वाजातादेवेब्भ्यस्त्रियुगम्पुरा। मनैनुवब्भ्रूणामह ६ शतन्धामानिसप्तच ।।५।। हिरण्यगर्भ इति पञ्चरत्नानि- ओं हिरण्यगर्भः समवर्त्तताग्रेभूतस्य जातः पतिरेकऽआसीत् । सदाधारपृथिवीन्द्यामुते-माङ्कस्मैदेवाय हविषाव्विधेम ।।६।। या फलिनी इति पूगीफलादीनि- ओं याः

फलिनीर्य्याऽअफलाऽअपुष्पायाश्च्च पुष्पिणीः। बृहस्पतिप्प्रसूतास्तानोमुञ्चन्त्व ६ हसः ।।७।। ओषधय इति यवान्- ओं ओषधयः समवदन्तसोमेन सहराज्ञा। यस्मै कृणोतिब्राह्मणास्त्व ठ० राजन्पारयामसि ।।८।। गंधद्वारान् इति गन्धम्- ओं गन्धद्वारान्दुराधर्षान्नित्यपुष्टाङ्करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये-श्रियम् ।।९।। काण्डात्काण्डात् इति दूर्वा- ओं काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्प्परि। एवानोदूर्व्वेप्प्रतनुसहस्रेणशतेन च ।।१०।। स्योनापृथिवी इति सप्तमृदः-ओं स्योनापृथिवीनोभवानृक्षरानिवेशनी । यच्छानः शर्म्मसप्प्रथाः।।११।। अश्वत्त्थेव इति पञ्चपल्लवैस्तमुखमाच्छाद्य- अश्वत्त्थेवोनिषदनम्पर्ण्णेवोव्वसतिष्कृता । गोभाज-ऽइत्किलासथयत्सनवथपुरुषम् ।।१२।। अम्बेऽम्बिके इति आम्रपल्लवैस्तन्मुखमा-च्छाद्य-ओं अम्बेऽअम्बिकेम्बालिकेनमानयतिकश्चन । ससस्त्यश्वकः शुभ्रद्रिकाङ्काम्पील वासिनीम् ।।१३।। बृहस्पतेऽअति इति वस्त्रयुग्मेन कलशं वेष्टयेत्- ओं बृहस्पतेऽ-अतियदर्य्योऽअर्हाद्द्युमद्विभातिक्क्रतुमज्जनेषु । यद्दिदयच्छवसऽऋतप्रजाततदस्म्मा-



सुद्रविणन्धेहिचित्रम् । उपयामगृहीतोसिबृहस्प्पतयेत्वैषतेयोनिर्बृहस्पतयेत्वा ।।१४।। तत्वायामीति कलशे वरुणमावह्य पूजयेत्- ओं तत्वायामिब्रह्मणाव्वन्दमानस्तदाशास्तेय-जमानोहविर्भिः । अहेडमानोव्वरुणेहवोद्ध्युरुश ६ समानआयु प्प्रमोषीः।।१५।। ततः कलशे गङ्गादितीर्थान्यावाहयेत्- ओं सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः। आयान्तु यजमानस्य दुरित क्षयकारकाः ।।१६।। ततः कलशं स्पृष्ट्वा-भिमन्त्रयेत्- ओं कलशस्य मुखे विष्णु कण्ठे रुद्रःसमाश्रितः । मूले त्वस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ।।१७।। कुक्षौ तुं सागराः सप्त-सप्तद्वीपा वसुन्धरा। ऋग्वेदोऽथयजुर्वेदः सामवेदोऽप्यथर्वणः ।।१८।। अङ्गैश्च सहिताः सर्वे कलशन्तु समाश्रिताः । तत कलशप्रार्थना- ओं देवदानवसम्वादे मथ्यमाने महोदधौ । उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ।।१९।। त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः।।२०।। शिवः स्वयं त्वमेवासि विष्णुः त्वं च प्रजापतिः।

आदित्या वसवो रुद्रा विश्वेदेवाः सपितृका ।।२१।। त्वयि तिष्ठन्ति सर्वेपि यतः कामफलप्रदाः। त्वत्प्रसादादिमं यज्ञं कर्तुमीहेजलोद्भव ।।२२।। सान्निध्यं कुरु देवेश प्रसन्नो भव सर्वदा ।। इति ।।

*अथ दीपपूजा :-* स्थिरोभवेति प्रज्वाल्य-ओं स्थिरोभवव्वीड्वङ्गऽआशुर्भव-वाज्ज्यर्व्वन् । पृथुर्ब्भवसुखदत्वमग्नेः पुरीषवाहणः ।।१।। पृष्टोदिवीति पूजनम्-ओं पृष्टोदिविपृष्टोऽअग्निः पृथिव्याम्पृष्टोव्विश्वाऽओषधीराविवेश । व्वैश्वानरः सहसा-पृष्टोअग्निः सनोदिवासरिषस्प्पातुनक्तम् ।।२।। अथ गणेशपूजा- ओं अद्येत्यादि अमुककर्मनिर्विघ्नपरिसमाप्त्यर्थममुककर्माङ्गतया गणेशपूजनमहं करिष्ये इति सङ्कल्प्य गणानान्त्वेति हेहेरम्बेत्यादीश्च षठन्नावाहयेत्- ओं गणानान्त्वागणपति ८ हवामहे प्प्रियाणान्त्वाप्प्रियपति ८ हवामहेनिधीनान्त्वानिधिपति ८ हवामहेव्वसोमम। आहमजानिगर्ब्भधमात्वमजासि गर्ब्भधम् ।।१।। *ओं हे हेरम्ब त्व मेह्येहि अम्बिका-*



त्र्यम्बकात्मज । सिद्धि बुद्धिपते त्र्यक्षलक्षलाभयितः पितः।।२।। नागास्यनागहार त्वं गणराज चतुर्भुज । भूषितः स्वायुधैर्दिव्यैः पाशाङ्कुश-परश्वधैः ।।३।। आवाहयामि पूजार्थं रक्षार्थं च मम क्रतोः । इहागत्य गृहाण त्वं पूजां कर्तुं च रक्ष माम् ।।४।। इत्यावाह्य ओं भूर्भुवः स्वः गणपते सिद्धि बुद्धि सहिताय सायुधाय सवाहनाय सपरिवाराय इदमासनं समर्पयामीति प्रतिप्रयोगः सहस्त्रशीर्षेत्यादिप्रत्यगृग्भिः षोडशोपचारै सम्पूजयेत् ।। तद्यथा आसनम् पाद्यम्, अर्घ्यम्, आचमनीयम्, यज्ञोपवीतम्, वस्त्रम्, चन्दनम्, दूर्वाक्षतम्, धूपम्, दीपम्, नैवेद्यम्, आचनीयम्, ताम्बूलम्, वस्त्रालङ्कारादि यल्लब पादवन्दनम् एभिः सम्पूज्य नारिकेलादि फलं सवस्त्रं पुरतः पात्रे निधाय स्तुतिं कुर्यात्-- ओं रक्ष रक्ष गणाध्यक्ष त्र्यक्ष त्रैलोक्य-रक्षक ।। भक्तानामभयंकर्ता त्राता भव भवार्णवात् ।।१।। द्वैमातुर कृपासिन्धो षाण्मातुराग्रज प्रभो । वरदस्त्वं देहि वरं वाञ्छितं वाञ्छितार्थद ।।२।। अनेन फलदानेन फलदोऽस्तु सदा मम।। इति फलं निवेदयेत्।।

## ऋषी तर्पण

अथ वꣳ शः समानमासाञ्जीवीपुत्रात्साञ्जीवीपुत्रो माण्डूकायनेर्माण्डूकायनिर्माण्ड-व्यामाण्डव्यः कोत्सात्कौत्सो महित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणो वात्स्या-द्वात्स्यऽशाण्डिल्याच्छाण्डिल्यः कुश्रेः कृश्रिर्यज्ञवचसो राजस्नम्बायनाद्यज्ञवचा राजस्तम्वायस्तुरात्कावषेवातुरः कावषेयः प्रजापतेः प्रजापतिर्ब्रह्मणो ब्रह्मस्वयंम्भु ब्रह्मणे नमः।। वंशोक्ता ऋषय स्तृप्यन्ताम्[1] ।। अथवꣳ शस्तदिदं वयꣳ शौपर्णाय्या-च्छौपर्णाय्यो गौतमाद्गौतमो वात्साद्वात्सो वात्स्याच्च पाराशर्याच्च गौतमाच्च पाराशर्यसांकृत्याच्च भारद्वाजाच्च भारद्वाजऽऔदवाहेश्च शाण्डिल्याच्च शाण्डिल्यो वैजवापाश्च गौतमो वैजयापनाच्च व्वैष्ठपुरेयाच्च व्वैष्ठपुरेयः शाण्डिल्याच्च रोहिणायनाच्च रौहिणायनः शौनकाच्चात्रेषाच्च रैभ्याच्च रैभ्यः पैतिमाख्यायणाच्च कौडिन्यायनाच्च कौण्डिन्यायनः कौण्डिन्यात्कौण्डियः कौण्डिन्यात्कौण्डिन्यः

१. सप्तऋषीणां जल सेचनम् ।



कौण्डिन्यात्कौण्डिन्यः कौण्डिन्याच्चाग्निवेश्याच्च ।।२।। अग्निवेश्यः सैतपात् सेतवः पाराशर्यात्पाराशर्यो जातुकर्णाज्जातुकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च गौतमाच्च गौतमो भारद्वाजाच्च भारद्वाजो वैजवापायनाद्वैजवापानः कौशिकायने कौशिकायनिघृत कौशिकाद्घृतकौशिकः पाराशर्य्यायिणात्पाराशर्य्यायिणः पाराशर्य्यो जातुकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजा-च्चासुरायणाच्च यास्काच्चासुरायणस्त्रैवर्णैस्त्रैवणि रौपजन्धने रौपजन्धनिरासुरेश-सुरिर्भारद्वाजाद्भारद्वाजऽआत्रेयात् ।।३।। आत्रेयोर्माण्टेर्माण्टि गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वा ꣳ शाण्डिल्याच्छाण्डिल्य ꣳ कैशोर्य्यात्काप्यात्कौशोर्य्य ꣳ कुमार हारितात्कुमारहारितो गालवाद्गालकोविदर्भी कौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सन पाद्वाभ्रव ॐ पयः सौ भएत्पत्या सौभरोऽयास्यादाङ्गिरसादयास्यऽआङ्गिरस्यऽआ-भूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौदधीच आथर्वणाद्दध्यङ्ङाथर्वणो दैवादथर्व्वाद्दैवो मृत्योः प्राध्वः सनामृत्युः प्राध्वः सनः

प्राध्व सनात्प्राध्व ॐ सनऽएकर्षेरेकर्षिर्व्विप्रजि तेर्व्विप्रजितिर्यष्टिः सनारुः सनातनात्सनातनः सनगात्सननः परमेष्ठी ब्रह्मणो ब्रह्मस्वयम्भु ब्रह्मणे नमः।।४।। वंशोक्ता० ।। अथव ॐ शस्त्रादिदं वय ॐ शौर्पणाय्याच्छौर्पणाय्यो गौतमाद्गौतमो वात्स्याद्वात्स्यो वात्स्याच्च पाराशर्याच्च पाराशर्यः साङ्कृत्याच्च भारद्वाजाच्च भारद्वाजऽऔदवाहेश्चशाण्डिल्याच्च शाण्डिल्यो वैजवापाच्च गौतमाच्च गौतमो वैजवापायनाच्च व्वैष्ठपुरेयाच्च वैष्ठपुरेय शाण्डिल्याच्च रौहिणायनाच्च रौहिणायनः शौनकाच्च जैवन्तायनाच्च रैभ्याच्च रैभ्यः पौतिमाख्यायशाच्च कौण्डिन्याऽऔर्णावाभेक्यः ऽऔर्णवाभः कौण्डिन्यात्कौण्डिन्य कौण्डिन्यात्कौण्डिन्य ऽकौडिन्यच्चाग्निवेश्याच्च ।।५।। अग्निवेश्य ऽ सैतवात्सैतवः पाराशर्यो जातूकर्ण्या जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चसुरायणाच्च गौतमाच्च गौतमो भारद्वाजा-द्भारद्वाजो बलाकात्कौशिकाद्बलाकाकौशिक काशायणात्काषायणः सौकरायणात्सौ-करायणस्त्रैवणेस्त्रैवणिरौपजन्धने रौपजन्धनिः सायकायानात्सायकायनः कौशिकायनेः



कौशिकायनिर्घृतकौशिकाद्धृतकौशिक पाराशर्यायणात्पाराशर्य्यायिणः पाराशर्या-त्पाराशर्य्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च यास्काच्चासुरायणा स्त्रैवणोस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भार-द्वाजआत्रेयात् ।।६।। आत्रेयादात्रेयोमाण्टेर्माण्टिगौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारिता-त्कुमारहारितोगालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो वाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौरभात्पन्थाः सौरभो यास्यादाङ्गिरसादयास्यऽआङ्गिरस-ऽआभूतेस्त्वाष्ट्रोविश्वाभ्यामश्विनौदधीचऽ अथर्वणादध्यङ्गाथर्वणो दैवादथवादैवो मृत्योः प्राध्वः सनान्मृत्युः प्राध्वः सनात् प्राध्वः सनऽएकर्षेरेकर्षिर्विप्रजितेर्विप्रजितिर्व्यष्ठे-र्व्यष्ठिसनारो सनारुः सनातनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठि ब्रह्मणो ब्रह्म स्वयम्भुब्रह्मणे नमः। वंशो० ।।७।। अथ वय ॐ शस्तादिदं वयः भारद्वाजीपुत्रा-द्भारद्वाजीपुत्रो व्वात्सीमाण्डवीपुत्राद्वात्सीमाण्डवीपुत्रोः पाराशरी कौण्डिमीपुत्रात्पारा-

शरीकौण्डिनीपुत्रो गागीर्पुत्राद्गार्गीपुत्रो गार्गीपुत्राद्गार्गीपुत्रो वाडेयीपुत्राद्वाडेयीपुत्रो मौषिकीपुत्र मौषिकीपुत्रो हरिकर्णीपुत्राद्धारिकर्णी पुत्रोद्धारद्वाजीपुत्रः पौङ्गीपुत्रात्पयौङ्गीपुत्रः शौनकीपुत्राच्छौनकीपुत्रः ।।८।। काश्यपीबालाक्यामाठरी-पुत्रात्काश्यपी बालाक्यमाठरीपुत्रः कौत्सीपुत्रात्कौत्सीपुत्रो वार्षगणीपुत्रात्वार्ष-गणीपुत्रः गौतमी पुत्राद्गौतमीपुत्रः आत्रेयीपुत्रादात्रेयीपुत्रोगौतमीपुत्राद्गौतमी-पुत्रोवात्सीपुत्राद्वासीपुत्रो भारद्वाजीपुत्राद्धारद्वाजीपुत्रपाराशरीपुत्रात्पाराशरीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्रः आर्तभागीपुत्रादार्तभागीपुत्रः शौङ्गीपुत्राच्छौङ्गीपुत्र साङ् कृतीपुत्रात्साङ् कृतीपुत्रः ।।९।। आलम्बीपुत्रा द्वालम्बीपुत्रा आलम्बीपुत्रऽआलम्बायनी पुत्रादालम्बायनीपुत्रो जायन्तीपुत्राज्जायन्ती पुत्रो माण्डूकायनीपुत्रान्माण्डूकायनीपुत्रो माण्डूकीपुत्रान्माण्डूकीपुत्रो माण्डूकी-पुत्रान्माण्डूकीपुत्रः शाण्डिलीपुत्राच्छाण्डिलीपुत्रो राथीरतीपुत्राद्राथीरती पुत्रः क्रौञ्चिकी पुत्राभ्यां क्रौञ्चिकीपुत्रो वैदभृतिपुत्राद्वैदभृतिपुत्रो भालुकी पुत्राद्धालुकीपुत्रः प्राचीनयोगिपुत्रात्प्राचीनयोगिपुत्रः साञ्जीवीपुत्रात्साञ्जीवो



पुत्रः कार्षकेयीपुत्रात्कार्षकेयीपुत्रः।।१०।। प्राश्नीपुत्रादासुरीवासिनः प्राश्नीपुत्र-आसुरायणादासुराणऽआसुरेरासुरीयज्ञवल्क्याद्याल्क्यऽउद्दालकादूदुदालकोरुणा-दाणऽ उपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजिश्रवसोवाजश्रवा जिह्वावतोब्वा-ध्योगाज्जिह्वावान्वाध्यो गोसिताद्वार्षगणा दसितोव्वार्षगणो हरितात्कश्यपः हारितः कश्यपः शिल्पात्कश्यताच्छिल्पः कश्यपः कश्यपान्नैध्रुविः कश्यपोनैर्ध्रुव्विावचो-वाम्भिण्याऽअम्भिण्यादित्यादादित्यानीमानि शुल्कानि यजू ꣳ षि वाजसनेयेन याज्ञवल्केनाख्यायन्ते ।।११।। वंशोक्तात्रृषयस्तृ प्यन्ताम् । चतुर्वारं गायत्रीं जपेत्। सावित्र्या श्चतुःकृत्वाऽनुवृवणम् । सर्वेषां तदनो ॐ विरतास्म । सकृदुच्चैर्ब्रूयात्।।

*अध्यापाः*- इषेत्वा ।१। कृष्णोसि ।२। संमिधाग्निम् ।३। एदम् ।४। अग्नेस्तनूः ।।५।। देवस्यत्वा ।६। वाचस्पतये ।७। उपयामगृहीतोसि ।८। देव सविता ।९। अपोदेवा ।१०। जुञ्जानः प्रथमम् ।११। दृशानोरुक्मः ।१२। मयिगृहणामि ।१३। ध्रुवक्षितिर्ध्रुवयोनि ।१४। अग्नेजातान् ।१५। नमस्ते ।१६।

अश्म्मन्नूर्ज्जम् ।१७। व्वाजश्च ।१८। स्वाद्वीन्त्वा ।१९। क्षत्रस्ययोनिः ।२०। इमम्मे ।२१। तेजोसि ।२२। हिरण्गर्भः सम् ।२३। अश्वतूपरः।२४। शादन्दद्भि ।२५। अग्निश्च ।२६। समास्त्वा ।२७। होतायक्षत् ।२८। समिद्धोअञ्जन् ।२९। देवसवितः ।३०। सहस्रशीर्षा पुरुषाः ।३१। तदेव ।३२। अस्याजरा ।३३। यज्जाग्रतः ।३४। अपेत ।३५। ऋचं वाचम् ।३६। देवस्यत्वा ।३७। देवस्य ।३८। स्वाहा प्राणोभ्यः।३९। ईशावास्यम् ।४०। ओं हिरण्यमयेन पात्रेण सत्यस्यापिहितंमुखम् । योसावादित्ये पुरुषः सोसावहम् । ओं खं ब्रह्म ।३। अध्यायोक्ता ऋषयस्तृप्यन्ताम् । अथ कण्डिका - व्रतमुपैख्यन् ।१। सबैकवालात्येवनन्यन्तरऽउपदधाति ।२। सबैसुचाः संमाष्टिं ।३। हिङ्त्यान्वाह ।४। सवैप्रवराया श्रावयंक्ति ।५। ऋंत वोहवै देवेषु यज्ञे भागमिषिरे ।६। सवै पर्णशाखाया वात्सानपाकरोति ७ मनवे हवै प्रातः ।८। सयत्राह ।९। सजद्वा इतश्चेतश्च सम्भरति ।१०। उधृत्या हवनीयम्पूर्णाहुतिं जुहोति ।११। सूर्योहवाः



अग्निहोत्रम् ।१२। अथ हुतेग्निहोत्रमुपतिष्ठन्ते ।१३। प्रजापतिर्हवा इदमग्नऽएकऽएवा स ।१४। महाहविषाहवै देवा वृतं जघ्नः ।१५। देवयजनं जोषयन्ते।१६। दक्षिणाहवनीयं प्राचीनग्रीवे कृष्णा जितेऽउपस्तृणाति ।१७। सप्तपदान्यनुनिःक्रामति ।१८। शिरोवै यज्ञस्यातिथ्यं बाहू प्रयणि योदयनीयौ।१९। तद्यऽएषपूर्वार्घ्यो वषिष्ठं स्थूणराजे भवति ।२०। उदरमेवायसदः ।२१। अभ्रि-मादत्ते ।२२। तद्यत्रेतत्प्रवृतो होता होतृषदनऽउपविशति ।२३। प्रजाः ससृजातो रीरिचानऽइवामन्यत ।२४। प्राणोहवावाऽअपा ॐ शुः।२५। चक्षुषी हवाऽअस्यशुक्रामन्थिनौ ।२६। भक्षयित्वा ।२७। मनोहवाऽअस्य सविता।२८। आदित्येन चरुणोदनीयेन प्रचरति ।२९। प्राजापतिर्व्वाऽएषयद ॐ शुः।३०। देवाश्चवाऽअसुराश्च ।३१। अथ स्रुवश्चाज्ज्यविलापनी चादाय ।३२। अरण्योरग्नीसमारोह्य ।३३। केशवस्य पुरुस्य ।३४। अग्नेयोष्टाकपालः पुरोडाशो भवति ।३५। असद्वाऽइदमग्रऽआसीत् ।३६। प्रजापतिरग्निरूपाण्यभ्यध्यायत्

।३७। एतद्वै देवाऽअब्रुवन् ।३८। अथैनमतः खनत्येव ।३९। पर्णकषाय निष्पक्काऽएताऽआपो निष्पक्काऽएताऽआपो भवन्ति ।४०। भूया ৺ सि हवींषि भवन्ति ।१४। रुक्मम्प्रतिमुच्य बिभर्ति ।४२। व्वनीवाह्येताग्नि विभ्रदित्याहुः।४३। गार्हस्पत्यं चेष्यन्यलाशशाखया व्युदूहति ।४४। अथातो नैर्ऋतीर्हरन्ति ।४५। चितो गार्हपत्यो भवति ।४६। आत्मन्नग्निं गृहणीतेचेष्यन् ।४७। कूर्म्ममुपदधाति ।४८। प्राणभृतऽउपदधाति ।४९। द्वितीयां चित्ति मुपदधाति ।५०। तृतीयां चितिमुपदधाति ।५१। चतुर्थीं चितिमुपदधाति ।५२। पञ्चमीं चितिमुपदधाति।५३। नाकसदः उपदधाति ।५४। ऋतव्याज्ञउपदधाति ।५५। अथा- तशतरुद्रियं जुहोति।।५६। उपवसथीयेहन् प्रातरुदित आदित्ये ।५७। अथातो वैम्बानरं जुहोति ।५८। अथातो राष्ट्रभृतो जुहोति ।५८। अथातः पयोव्रतताये ।६०। अग्निरेष पुरस्ताच्चीयते ।६१। प्रजापतिः स्वर्गलोकमजिगा ৺ सत् ।६२। प्राणो गायत्री ।६३। प्रजापति सिस्त्रस्तम् ।६४। तस्य वाऽएतस्याऽग्नेः।६५। *अथ हैतेरुणे*।६६।



संवत्सरो वै यज्ञः प्रजापति ।६७। त्रिर्हवे पुरुषो जायते ।६८। व्वाग्घवाऽएतस्याग्नि-होत्रस्याग्निहोत्री ।६९। उद्दालको वारुणि ।७०। उर्वशीहाप्सराः ।७१। भृगुर्हवै वारुणिः।७२। पशुबन्धे न जयते ।७३। तद्यथा हवै ।७४। अयं वै यज्ञो योयं पते।७५। समुद्रं वाऽयते प्रचरन्ति।७६। महालोके ।७७। दीर्घसूत्रं हवाऽएतऽ-उपयन्ति ।७८। तदाहुर्यदेष दीर्घसत्री ।७९। सोमो वै राजा यज्ञं प्रजापतिः।८०। विश्वरूपं वै त्वाष्ट्रमिन्द्रोऽहन् ।८१। इन्द्रय वै यत्र ।८२। एतस्माद्वै यज्ञात्पुरुषो जायते ।८३। ब्रह्मौदनं पचति ।८४। प्रजापतिर्देवेभ्यो यज्ञान्व्यादित् ।८५। प्रजापते रक्ष यत् ।८६। प्रजापतिरकामयत् ।८७। अथप्रातगौंतमस्य।८८। पुरुषो हव नारायणोऽकामयत् । ८९। ब्रह्म वै स्वयंभु तपोऽतप्यंत ।९०। अथामै श्मशानं कुर्वन्ती द्यौः शान्तिः ।९१। देवा ह वै सत्रं निषेदुः।९२। अथातो रौहिणौ जुहोति ।९३। स वै तृतीयेऽहन् ।९४। द्वयाह प्रजाह प्रजापत्यः।९५। दृप्तबालाकीर्हानूचानो गार्ग्यऽआस ।९६। जनकोह वैदेहः।९७। जनकं ह वैदेहं

याज्ञवल्क्यो जगाम ।९८। पूर्णमदः पूर्णमिदम् ।९९। श्वेतकेतुर्हवा आरुणेयः।१००। प्राश्नीपुत्रादासुरीवासिनः चतुर्दश काण्डेष्वध्यायोक्ता ऋषयतृप्यन्ताम् ।

*शतस्थानानि* :- ॐ इषेत्वा ।१। परिते ।२। अग्नेनय ।३। उपयामगृहीतोसि सुशर्म्मासि ।४। (प्रथमा) सोमस्यत्त्विषि ।५। परस्याअधि ।६। अन्वावः ।७। राज्ञसि ।८। नमोहिरण्यवाहवे।९। इन्द्रेमम् ।१०। इमौते ।११। अन्नात्परिस्नुत ।१२। अश्विनः तेजसा ।१३। पृथिव्यै स्वाहा ।१४। प्रजापतये च ।१५। तेऽअस्य ।१६। तनूनपात्यथः ।१७। अथमिह ।१८। अनु नः ।१९। इयत्यग्ने। २०। हिरण्मयेन पात्रेण । ॐ खंब्रह्म शतोनका ऋषयस्तृप्यन्ताम् । व्रतमुपैष्यत् ।१। तदेवं पिन्तष्ठि ।२। अथाञ्जलित्पाभ्यां पवित्राभ्याम् ।३। बृहच्छोच्वा यविष्ठयेति ।४। वसूना ꣳ रातौस्याम ।५। अग्निर्वै देवानामब्धातमाम् ।६। तद्यथा योनौरेतः सिश्वेत ।७। ता वै प्राश्नन्त्येव ।८। *अथ वेद पत्नी विश्व* ꣳ



सयति।९। अयं वै यतो योऽयं पवते ।१०। अथ सदस्तमेति ।११। रेवतीरमध्वमिति ।१२। सवाऽआग्नेयोऽष्टाकपालः पुरोडाशो भवति ।१३। तद्ये सोमेनेजानाः ।१४। अथो तरेणा सलां परिश्रमन्ति ।१५। अथोल्लिखति ।१६। सा या बभ्रुः पिङ्गाक्षी सा सोम क्रमयणीस्यात् ।१७। प्रथमं तेदेवाः ।१८। इन्द्रघोषः प्रोक्षणी-रध्वर्य्युरान्ते ।१९। सा हा कद्रुरुवाच ।२०। तद्यएत उच्छ्रिता देवा ह वै यज्ञन्तन्वान्वाः।२१। अथ पार्श्वेन वासिना वा प्रय्योति ।२२। सजुहोति शृणोत्वाग्निः समिधा हवं म इति। २३। इय ꣳ हवाऽउषा ꣳ शुः।२४। तस्या सावैव ध्रुवऽआयुः ।२५। यत्रद्यावा पृथिव्या ꣳ शस्यते ।२६। सऽआज्यस्योपस्तीर्य द्विश्चरो रबद्यति ।२७। इन्द्रो हवै षोडशी ।२८। तासां द्वादशगर्भाः।२९। तद्ये हस्मपुरा वाजयेयेन यज्ञते ।३०। अथ दिशोऽनुवीक्षमाणोजपति।३१। स वै दीक्षते।३२। अथैतमभिषेकं कृष्णविषाणयानु विम्रष्टे ।३३। षडेवोत्तरे चरवः ।३४। अथोआहुः।३५। अमावस्याया दीक्षते ।३६। अश्वस्य पदेजुहोति।३७।

अथैना धूपयति ।३८। तम्नपरिनाभिबिभर्ती ।३९। अथोपान्त्रिवपति ।४०। चतस्त्रः सीता यजुषा कृषति ।४१। तं प्रत्यञ्च यन्तम् ।४२। अपाङ्गम्भत्सीदेति ।४३। तस्यमनो वैश्वकर्मणामिति ।४४। तद्यैषामध्यमा स्वयमातृष्णा ।४५। एकादशभिरस्तुववेति।४६। ताऽवा एता विराडेषा ।४७। अथ स्वयामातृण्णामुपद-धाति।४८। अथोत्तरार्धेन प्राक् ।४९। सुयः स वैश्वानरः।५०। यस्तेअग्ने सूर्येरुचः।५१। नामकृत्वाथैनमुपतिष्ठते ।५२। यावाऽइयं वेदिः सप्तविधस्य ।५३। अयमेन्तकाशो जूः ।५४। सोयमात्मा त्रेधा विहितऽएव ।५५। अथ व ꣳ।५६। अथ यामेता याहुति जुहोति ।५७। अथ यदनु वाक्यामनूच्य ।५८। ब्रह्मचार्यसी त्याह।५९। सयत्पशु बन्धेन यजते ।६०। दशैति होवाच।६१। अथ यत्रस्कन्न ꣳ स्यात् ।६२। अथ यदि प्रल्पुतः ।६३। सर्वे अश्विना भवन्ति।६४। प्रजापतिर्यज्ञमसृजत ।६५। किं वा वपनं महदिति ।६६। अथ योस्थानिस्कः प्रतिमुक्तो भवति ।६७। एतेनहेन्द्रो तो दैवापः शौनकः।६८। सहस्त्रः सीता



यजुसाः कृषति। ६९। अथोत्तरतः सिकताऽउपकीर्णा भवन्ति । ७०। अथ रौहिणौ जुहोति ।७१। ते देवाऽअब्रुवन् ।७२। तानि यदा गृहातति ।७३। योग्नै तिष्ठन् ।७४। कतम आत्मेति ।७५। अथ हैनं मनुष्याऽउचुः।७६। अथ यामिच्छेदद्गर्भन्दधीतेति।७७। सप्तसहस्त्रषट्शत् शैषं चतुर्विं ꣳ शतिः।७८। प्राश्नीपुत्रारासुरिवासिनः ।७९। चतुदर्शकाण्डे शतोक्ता ऋषयस्तृप्यन्ताम् । अथ प्रपाठकाः- व्रतमुपैख्यन् ।१। चतुर्धाविहितो हवाऽअग्नेग्निरास ।२। तेवाऽआर्द्राः सुः ।३। स सुचोत्तरमाधरमाधारयिष्यन् ।४। यज्ञेन वै देवाः ।५। यज्ञेन वै देवा दिवमपोदक्रामन् ।६। सवै सुचो व्यूहति ।७। स यद्वाऽइतश्चेतश्च सम्भरति ।८। वरुणो हैनद्राज्यकामऽआदधे ।९। यत्र वै प्रजापतिः प्रजाः ससृजे ।१०। प्रजापतिर्ह वाऽएतेनाग्ने यज्ञेनेजे ।११। महाहविषा हवैदेवा वृत्रं जन्घुः ।१२। देवयजननं योषयन्ते ।१३। वाचं यच्छति ।१४। नीडे कृष्णाजिनमास्तृणाति ।१५। नदयऽएव पूर्वोर्ध्यो वर्षिष्ठः स्थूणोराजो भवति।१६। विजायमानो

हैवास्थधिष्ण्याः ।१७। पाशं त्त्वाप्रतिमञ्चति ।१८। सोत्युपयजति।१९। प्राणोहवा अस्योपा ॐ शुः।२०। आत्माहवाऽअस्याग्रयण ।२१। घ्नन्ति वाऽएतद्यज्ञम् ।२२। सवाऽअवभृथमभ्यवैति ।२३। तद्यत्रैतद्द्वादशाहेन व्यूढच्छन्दसा यजते ।२४। देवाश्चत्राऽअसुराश्च।२५। वार्हस्पत्येन चरुणा प्रचरति।२६। सवाअपः सम्भरति।२७। मैत्रावरुणस्थापस्थया चरति ।२८। अस द्वाऽइदमग्न आसीत् ।२९। प्रजापत्यश्चरङ्काऽआलम्भन्ते ।३०। प्रदीप्ताः एतेग्नयो भवन्ति।३१। तस्याऽएतस्यऽआषाढ पूर्वाकरोति ।३२। रुक्मं प्रतिमुच्य विभर्ति ।३३। गार्ह स्पत्यश्चेष्यन्पलाशशाखया व्युदूहति ।३४। अथ दर्भस्तम्भमुपदाति ।।३५।। आत्मन्नग्निं सह्मीते चेष्यन् ।।३६।। कूर्ममुपदधाति ।।३७।। प्राणभृत उपदधाति। ।३८। अथ विश्वज्योतिषमुपदधाति ।३९। अथातोन्वावृत्तम् ।४०। गार्हपत्य-मुपदधाति ।४१। अथातःशतरुद्रियं जुहोति ।४२। प्रत्योत्यग्निं प्रहरिष्यत् ।४३। अथैकान्यज्ञक्रतुञ्जुहोति।४४। अथ प्रातः प्रातरनुवाकमुपाकरिष्यन् ।४५। अग्निरेष



पुरस्ताच्चीयते ।४६। अथातश्चयनस्यैव ।४७। संवत्सरोवै प्रनापतिरग्निः ।४८। नेववाडइदमग्ने सदसीन्नेवसरासीत् ।४९। संवत्सरो वै यज्ञः प्रजापतिः ।५०। अपिहवाऽएतर्हि ।५१। प्रजापतिर्वै प्रजासृजमानोऽतप्यत् ।५२। अथातः स्वाध्याय प्रश ॐ सा।५३। अयं वै यज्ञो योयं पवते ।५४। पुरुष ॐ ह नारायणं प्रजापति-रुवाच।५५। सोमो वै राज यज्ञ ॐ प्रजापतिः।५६। प्रजापतिर्यज्ञमसृजत ।५७। ब्रह्मैदनं पचति।५८। नियुक्तेषु पशुषु ।५९। प्रामुच्याश्च दक्षिणेन वेदिम् ।६०। पुरुषो ह नारायणेऽकामयत ।६१। देवाहवै सत्रतिषेद्गुः ।६२। सतत्रैन्ग ॐ होतान्वह।६३। ता ॐ इथाह प्रजापत्या ।६४। दृप्तबालाकीर्हानूचारो गार्ग्यऽआस ।६५। अथ हैन भुज्युर्लाह्यायनिः प्रपच्छ ।६६। जनक ॐ ह वैदेहं याज्ञवल्क्यो जगाम ।६७। भूमिरन्तरिक्षं द्यौरिति ।६८। प्राश्नीपुत्रादासुरिवासिनः।६९। चतुर्दशकाण्डे प्रपाठोक्ता ऋषयस्तृप्यन्ताम् ।

अथ व्रत विसृजते स यस्मिन्हर्त्ताविमुंलोकमेत्यथ निग्राम्यभ्यो ग्रहान्वि गृहणान्तेऽथ गृहपतिः सुब्रह्मण्यमाह्वयति ता वाऽएतास्तुस्तानि दशभवन्ति ताऽएता अङ्गुल्यो

मध्यमेव तृतीया चिति ᳪ सहोवाच थव ᳪ शस्तह्माऽउहैतदुवाच सवाऽएष आत्मैव यत्सौत्रामणी मर्यादायाऽएवं लोष्टमाहृत्य प्राश्रीपुत्रादासुरिवासिनः। अन्त्यकाण्डकोक्ता ऋषयस्तृप्यन्ताम् । एवं व्रतं विश्रृजेत परमाङ्गतिङ्गच्छतीति तस्माद्धोतृचभसात्तस्मिन् समुपहव मिष्ट्वासमिधोऽभ्यादधाति द्वादशवा त्रयोदशवा दक्षिणा भवन्ति यावानग्नि यर्वात्यस्य समात्रा तावत्तद्भवति तस्मात्समान सम्बन्धनास्तस्मादिमे प्राणऽउपरिष्टा दशश्चन्नाः संवादेनैवर्त्विजो लोका इति ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः काशिनी-रेवेमाऽआप्येतर्हि प्रजा जायन्ते तस्मादिमावात्मानमभियो बाहु तस्मादुहैतज्जीवाश्च पितरश्च न संदृश्यन्ते वाज सनेयेन याज्ञवल्क्यैनाख्यायन्ते ।।२।। चतुर्दशकाण्डे अत्यफक्किकोक्ता ऋषय स्तृप्यन्ताम् ।। *नमस्कारः* - ततः तदेतदृचाभ्युक्तं न मृषा श्रान्तं भवती तथो हास्यैतत्सर्वे देवाऽअवन्ति। विर्सजनम् - उत्तिष्ठब्रह्मणस्पते । स्वस्वप्रवरान्विसर्जयेत् । जलेप्रास्यन् - समुद्रंगच्छस्वाहा० । द्विराचम्य । अर्पणं अनेन श्रवणी कर्माङ्गत्वेन ऋषिपूजन तर्पणादि कर्मणा श्रीपरमेश्वर प्रीयतां न मम।

*इति श्रावणी प्रयोगः।*

०००



# अथ ऋषि पूजनम्

तत्रादौ ऋचंवाचं सम्पूर्ण अध्याय पठनीयम् । ऋषिप्रतिष्ठा ॐ मनोजूतिर्ज्जुषतामा-ज्यस्य बृहस्पतिर्यज्ञमिमन्तनो त्वरिष्टँ यज्ञ ᳪ समिमन्दधातु । विश्वेदेवासऽइहमाद-यन्तामों ।। म्प्रतिष्ठ ।। एष वै प्रतिष्ठा नाम यज्ञो यत्रैतेन यज्ञेनयजन्ते सर्वमेव प्रतिष्ठितम्भवति ।। ॐ प्रतिष्ठा सुप्रतिष्ठितमस्तु । इति मन्त्रेण ऋष्युपरि अक्षतान् क्षिपेत् । *आवाहनम्* - ॐ भूर्भुवः स्वः कश्यपं आवाहयामि, भो कश्यप इहागच्छ इह तिष्ठ पूजां गृहाण सुप्रसन्नो वरदो भव ।१। ॐ भूर्भुवःस्वः गौतमं आवाहयामि। भो गौतम इहागच्छ । यावत् पूजां करोमि तावत्त्वं सुस्थिरो भव प्रसन्नो भव वरदो भव ।२। ॐ भूर्भुवः स्वः आत्रेय इहागच्छ ।३। ॐ भूर्भुवःस्वः जमदग्ने इहा गच्छ ।४। ॐ भूर्भुवःस्वः वसिष्ठ इहागच्छ० ।५। ॐ भूर्भुवःस्वः विश्वामित्र इहागच्छ० ।६। ॐ भूर्भुवः स्वः भारद्वाज इहागच्छ०

।७। ॐ भूर्भुवः स्वः अरुन्धति इहागच्छ०। ॐ भूर्भुवःस्वः याज्ञवल्क्य इहागच्छ० ॐ इमामेव गौतम भरद्वाजा वयमेव गौतमोऽयं भारद्वाजऽइमामेव विश्वामित्रजमदग्नीऽअयमेव विश्वामित्रोऽयं जमदग्निरिमावेव वसिष्ठ कश्यपा वयमेव वसिष्ठोऽयं कश्यपो व्वागेर्वा । त्रिर्वाचा हयन्नमदयतेतिर्हवैनामैतद्यदत्रिरिति सर्व्वस्यात्ता भवति सर्वस्यान्नम्भवति यऽएवंवेद । *सङ्कल्प्य*- ममात्मनः श्रुतिस्मृतिपुराणोक्तफल-प्राप्त्यर्थं अरुन्धति सहित कश्यपादि ऋषिपूजनमहं करिष्ये । गणेश पूजनं स्मरणं वा। *ध्यानं* - ॐ सप्तऋषयः प्रतिहिताः शरीरेसप्तरक्षान्ति सदमप्रमादम् । सप्तापः- स्वपतोलोकमीयुस्तत्रजाग्रतोऽअस्वप्नजौसत्रसदौ च देवौ । ॐ भूर्भवःस्वः अरुन्धतिसहितकश्यपादिऋषिभ्यो नमः। *आसनम्* - सुवर्णघट्टितं दिव्यं नानारत्नसमन्वितम् । आसनं रुचिरं यच्च गृह्यतां भो मुनीश्वराः । ॐ पुरुष एवे० अरुन्धति० आसनं समर्पयामि। *पाद्यम्* - ॐ एतावानस्य० । गङ्गाजलं समानीतं गन्धद्रव्येण संयुतम् । पाद्यार्थं प्रतिगृहण्तु कश्यपाद्या महर्षयः । ॐ भूर्भुवःस्वः



अरुन्धती सहित कश्यपादि ऋषिभ्यो पाद्यं समर्पयामि ।। *अर्घ्यम्* - ॐ त्रिपादूर्ध्व० सुवर्णपात्रसंयुक्तं गन्धपुष्पाक्षतैर्युतम् । सप्तर्षयः प्रगृहण्तु इदमर्घ्यं मयार्पितम् । ॐ भूभुर्वः स्वः अरुन्धतीसहितकश्यपादि ऋषिभ्यो अर्घ्यं समर्पयामि। *आचमनम्* -ॐ ततोव्वि० कर्पूरवासितं तोयं सुवर्णकलशे स्थितम् । दत्तमाचमनीयं च ऋषीणां प्रीयते सदा ।। ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादिऋषिभ्यो आचमनीयं समर्पयामि । *स्नानम्* - ॐ तस्माद्यज्ञात्सर्व० सुगन्धद्रव्यसंयुक्तं पवित्रं मङ्गलं जलम् । स्नानार्थं वः समानीतं मुनयः प्रतिगृह्यताम् - ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादि ऋषिभ्यो स्नानं समर्पयामि । *पञ्चामृतस्नानम्* - ॐ पञ्चन० । पयोदधिघृतं चैव मधुशर्करयान्वितम् । पञ्चामृतं मयातीतं स्नानार्थं प्रतिगृह्यताम् - ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादि ऋषिभ्यः पञ्चामृत-स्नानं समर्पयामि।। गन्धोदक स्नानम् - ॐ गन्धद्वारांदु० - ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादि ऋषिभ्यो गन्दोदकस्नानं समर्पयामि ।। *वस्त्रम्* - ॐ

तस्माद्यज्ञा० सूक्ष्मान्यतीव सूत्राणि सुभ्राणि विविधानि च । ऋषयः प्रतिगृहणन्तु उष्णाशीतनिवारणे -ॐ भूर्भुवः स्वः अरुन्धतीसहित सप्त ऋषिभ्यो वस्त्रं समर्पयामि।। *यज्ञोपवीतम्* - ॐ तस्मादश्वा० नानामन्त्रैः समुद्भूतं त्रिवृत्तं ब्रह्मसूत्रकम् । प्रत्येकं दीयते स्वच्छं ऋषयः प्रतिगृह्यताम् - ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादि-ऋषिभ्यो यज्ञोपवीतानि समर्पयामि।। *गन्धम्* - तं यज्ञम्० आत्मसन्तापहारं च सुगन्धद्रव्यसंयुतम् । चन्दनं तत् प्रतीच्छामि ऋषीणां प्रीति हेतवे ।। अरु० कश्य० गन्धम्० स० ।। अक्षताः- ॐ अक्षन्नमी० शुभ्रतण्डुलजाः शुक्लाः शङ्खशुभ्रा मनोरमाः। अक्षतान्सप्रयच्छामि गृह्णन्तु मुनिपुङ्गवाः- ॐ भूर्भुवः स्वः अरुन्धतीसहित कश्यपादिऋषिभ्यो अक्षतान् समर्पयामि।। *कुम्कुमम्* - ॐ अहिरिव० हरिद्राकुङ्कुमं चैव कज्जलं भूषणानि च । कङ्कणं कण्ठसूत्रं च गृहाण परेमेश्वर - ॐ भूर्भुवःस्वः अरुन्धतीसहित कश्यपादि ऋषिभ्यो हरिद्राकुङ्कुमादि द्रव्याणि समर्पयामि ।। *पुष्पाणि* - ॐ यत्पुरुषे० माल्यादीनि सुगन्धीनि मालत्यादीनिसत्तमा । *मयार्पितानि*



पुष्पाणि गृहणन्तु मुनिपुङ्गवाः- ॐ भूर्भुवःस्वः अरुन्धतीसहितकश्यपादि ऋषिभ्यो ऋतुकालोद्भव पुष्पाणि समर्पयामि ।। धूपम् - ब्राह्मणोस्य० । कृष्णागुरुसमुद्भूतो धूपोयं च दशाङ्गकम् । सुगन्धः कश्यपादिभ्यः ऋषिभ्यो दीयतेधुना । अरु० कश्य० धूपं आघ्रापयामि ।।

*दीपम्* - चन्द्रमाम० । पञ्चवर्ति समायुक्तः सर्वमङ्गल शोभनः । मयानिवेदितो भक्त्या दीपोयं प्रति गृह्यताम् - ॐ भूर्भुवः स्वः अरु० दीपं दर्शयामि । *नैवेद्यम्* - ॐ नाभ्याआ० फलमूलसमायुक्तं नानाशाकसमन्वितम् । शर्कराघृतसंयुक्तं नैवेद्यं प्रतिगृह्यताम् ।। ॐ भूर्भुवः स्वः अरुन्धती० नैवेद्यम् सम० ।। आचमनीयं, उत्तरापोशानं, हस्त प्रक्षालनं, करोद्वर्तनं चन्दनं च सम० ।। *फलम्* - नारिकेलं च कूष्माण्डं कदलीकर्कटीफलम् । ऋतुकालोद्भवं चान्यद्दीयतेऽद्य मुनीश्वराः ।। ॐ भूर्भुवः स्वः।। *ताम्बूलम्* - ॐ यत्पुरुषेण० पूगीफलं सकर्पूरं नागवल्ली-दलैर्युतम् । एलालवङ्गसंयुक्तताम्बूलं प्रतिगृह्यताम् । ॐ भूर्भुवः स्वः ताम्बूलं

समर्पयामि । *दक्षिणा*- हिरण्य गर्भ० । हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः। अनन्तपुण्यफलदमतः शान्तिं प्रयच्छमे ।। ॐ भुर्भूवः स्वः दक्षिणां स० ।। *कर्पूरार्तिक्यम्* - ॐ इदं० ॐ। ब्रह्मिष्ठा ब्रह्मरूपाश्च कश्यपाद्या महर्षयः । ब्रह्मप्रज्ञादिदातारः सन्तु मे कीर्तिकर्मणि ।। ॐ भूर्भुवः स्वः कर्पूरारार्तिकं दर्शयामि।। *प्रदक्षिणा* - ॐ सप्तास्या०। यानि कानि च पापानि जन्मान्तरकृतानि च । तानि तानि विनस्यन्ति प्रदक्षिणापदे पदे ।। ॐ भूर्भुवः स्वः प्रदक्षिणां सम०।। *मन्त्रपुष्पाञ्जली* - ॐ यज्ञेनयज्ञ० । शरणागतदीनार्तपरित्राणपरायणः । रक्षन्तु मुनयः सर्वे मामद्यः शरणागतम् । सप्तर्षयः शुभाः श्रेष्ठाः सर्वेषां च शुभः प्रदाः। पुष्पाञ्जलिं मयादत्तं गृह्णन्तु मुनि सत्तमाः ।। ॐ भूर्भुवः स्वः मन्त्रपुष्पाञ्जलिं सम० ।। *प्रार्थना* - ॐ मन्त्रहीनं क्रियाहीनं भक्तिहीनं मुनीश्वराः । यत्पूजितं मया सर्वं परिपूर्णं तदस्तुमे ।। ॐ भूर्भुवः स्वः प्रार्थनां सम० ।। *अर्पणम्* - अनेन मया पूजनेन अरुन्धतीसहित कश्यपादि ऋषयः प्रियतां न मम ।। तत्सत् कृष्णार्पणमस्तु।।



# तन्तु देवता पूजा

**यज्ञोपवीत प्रक्षालनानन्तरं तन्तु देवतामावाहनम्- प्रणवस्य ब्रह्मात्रृषिः परमात्मा देवता गायत्री छन्द, प्रथम तन्तौ ॐ कारावाहने विनियोगः । ॐ प्रथमतन्तौ ॐ कारमावाहयामि । अग्निन्दूतमिति मेधातिथिर्ऋषिः अग्निर्देवता गायत्री छन्दः द्वितीयतन्तौ अग्न्यावाहने विनियोगः । ॐ अग्निन्दूतंपुरोदधे हव्यवाह मुपब्रुवे । देवां ॐ आसादया दिह । द्वितीय तन्तौ अग्निमावाहयामि ।। नमोस्तुसर्पेभ्यः इत्यस्य प्रजापतिर्ऋषिः सर्पादेवताः अनुष्टुप्छन्दः तृतीयतन्तौ सर्पावाहने विनियोगः। ॐ नमोस्तु सर्पेभ्यो ये केच पृथिवीमनु । ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः । तृतीयतन्तौ सर्पान्नवाहयामि ।।**

**वयं ॐ सोमेत्यस्य बन्धुर्ऋषिः सोमो देवता गायत्री छन्दः चतुर्थतन्तौ सोमावाहने विनियोगः, ॐ व्वय ॐ सोमव्रते तवमनस्तनूषु विभ्रतः। प्रजावन्तः सचेमहि।**

चतुर्थतन्तौ सोममावाहयामि ।

उदीरतामित्यस्य शङ्खऋषिः पितरो देवता त्रिष्टुप्छन्दः पञ्चमतन्तौ पित्रावहने विनियोगः ॐ उदीरतामवरऽउत्परासऽउन्नमध्यमाऽपितराः सोम्यासः । असुन्यऽ-इय्ररव्वृकाऽऋतज्ञास्तेनोवन्तु पितरो हवेषु ।। पञ्चमतन्तौ पितृन्नावाहयामि ।

प्रजापतेरित्यस्य हिरण्यगर्भऋषिः प्रजापतिर्देवता त्रिष्टुप्छन्दः षष्ठतन्तौ प्राजापत्यावाहने विनियोगः । ॐ प्रजापतये नत्त्वदेतान्न्यन्यो विश्वारूपाणिपरिता बभूव। यत्कामास्ते जुहुमस्तन्नोऽ अस्तुव्वय ꣳ स्यामपतयोरयीणाम् । षष्ठतन्तौ प्रजापतये नमः, प्रजापतिमावाहयामि । आनोनियुद्भिरित्यस्य वसिष्ठ ऋषिः अनिलो देवता त्रिष्टुप्छन्दः सप्तमतन्तौ अनिलावाहने विनियोगः ॐ आयोनियुद्भिः शतिनीभिरद्ध्वर ꣳ सहस्त्रिणीभिरुपयाहियज्ञम् । व्वायोऽअस्मिन्त्सवने मादयस्व यूयम्पात स्वस्तिभिःसदा नः।। सप्तमतन्तौ अनिलाय नमः अनिलमावाहयामि। सुगावो देव इत्यस्यात्रिर्ऋषिः, गृहस्पतयो देवता, आर्षी त्रिष्टुप्छन्दः अष्टमतन्तौ



यम आवाहने विनियोगः । ॐ सुगावोदेवाः सदनाअकर्मयऽआजग्मेद ꣳ सवनञ्जुषाणा भरमाणा व्वहमाना हवी ꣳ ष्यस्मेधत्तव्वस वो वसूनि स्वाहा । अष्टमतन्तौ यमाय नमः, यममावाहयामि । विश्वेदेवासऽआगत इत्यस्य मधुच्छन्दा ऋषिः विश्वेदेवा देवता त्रिष्टुप्छन्दः नवमतन्तौ विश्वेषां देवानामावाहने विनियोगः। ॐ विश्वेदेवासऽआगत शृणुतामऽइम ॐ हवम् । एदम्बर्हिर्न्निषीदत ।। नवम तन्तौ विश्वेभ्यो देवेभ्यो नमः विश्वान्देवानावाहयामि ।

यज्ञोपवीत ग्रन्थिदेवा आवाहनं पूजनं च- ब्रह्मयज्ञानमित्यस्य प्रजापतिर्ऋषिः ब्रह्मादेवता गायत्रीछन्दः ग्रन्थिमध्ये ब्रह्मावाहने विनियोगः । ॐ ब्रह्मयज्ञानम्प्रथम-म्पुरस्ताद्विषीमतःसुरुचोद्वेनऽआवः।। सबुधन्याऽउपमाऽअस्य व्विष्ठाः सतश्च ज्योनिमतश्च व्विवः ।। इदं विष्णुरित्यस्य मेधातिथिर्ऋषिः विष्णुर्देवता गायत्रीछन्दः ग्रन्थिमध्ये विष्णुमावाहने विनियोगः । ॐ इदं विष्णु० । त्र्यम्बकमित्यस्य वशिष्ठऋषिः रुद्रो देवता विराट् ब्राह्मी त्रिष्टुप्छन्दः ग्रन्थिमध्ये रुद्रावाहने विनियोगः

ॐ त्र्यम्बकं यजामहे० । यज्ञोपवीत ग्रन्थिदेवताभ्यो नमः ग्रन्थिदेवता आवाहयामि, षोडशोपचारैः पूजयेत् । *ध्यानम्* - प्रजापतेर्यत्सहजं पवित्रं कार्पाससूत्रोद्भवब्रह्मसूत्रम्। ब्रह्मत्वसिद्ध्यै च यशः प्रकाशं तषस्य सिद्धिंकुरु ब्रह्मसूत्रम् । युवासुवासाः परिवीतऽआगात्सऽउश्रेयान्भवति जायमानः । तन्धीरासः कवयऽउन्नयन्तिस्वाध्यो मनसा देवयन्तः।।

## अथ मण्डल ब्राह्मण

यदेतन्मण्डलं तपति तन्महदुक्थन्ताऽऋचः स ऋचां लोकोथ यदेतदर्चिर्द्दीप्यते तन्महाव्रतं तानि समानानि समाम्नाँलोकोथयऽएषऽएतस्मिन्मण्डले पुरुषः सोग्निस्तानि यजू ꣳ षि स यजुषाल्लोकः ।१। सैषा त्रय्येव विद्या तपतीनि वाग्धैव तत्पश्यन्ती व्वदति ।२। सऽएसऽएव मृत्युर्यऽएतस्मिन्मण्डले पुरुषोथै तदमृतं यदेतच्चिर्द्दीप्यते तस्मान्मृत्युर्नम्रियते मृतेर्ह्यनन्त स्तस्मादु न दृश्यते मृतेह्यन्त ।३। तदेष श्लोको



भवति अन्तरं मृत्योरमृतमित्यवर ꣳ हेतन्मृत्योरमृतम्मृत्यावमृतमाहितमित्येतस्मिन्हि पुरुषऽएतन्मण्डलम्प्रतिष्ठितं तपति मृत्युर्विवस्वन्तं वस्तऽइत्यसौ वाऽआदित्योरात्मा व्विवस्वतीत्येतास्मिन्हि मण्डलऽएतस्य पुरुषस्यात्मैतदेष श्लोको भवति ।।४।। तयोर्व्वाऽएतयोरुभयोरेतस्य चार्चिषऽएतस्य च पुरुषस्यैतन्मण्डलं प्रतिष्ठा तस्मान्महदुक्थम्परस्मैनश ꣳ सेन्ने देवतां प्रतिष्ठां छिनदाऽइत्येता ꣳ ह स प्रतिष्ठां छिन्तेऽयो महदुक्थं परस्मै शꣳशति तस्मादुक्थशंसम्भूयिष्ठं परिचक्षते प्रतिष्ठा छिन्नो हि भवतित्यधिदैवतम् ।५। अथ *अधियज्ञम्* - यदेतन्मण्डलं तपत्यय ꣳ स रुक्मोध यदेतदर्चिर्द्दीप्यतऽइदं तत्पुष्कर पर्णमापो ह्योताऽ आपः पुष्करषर्णमथ यऽएषऽएतस्मिन्मण्डले पुरुषोयमेव स योय ꣳ हिरणमयः पुरुषस्तदेतदेवै तत्त्रय ꣳ० संस्कृत्ये होपधत्ते तद्यज्ञस्यैवानु स ꣳ स्थामूर्द्धमुत्क्रामति तदेतमप्येति यऽएष तपति तस्मादग्निन्नाद्रियेत परिहन्तु ममुत्रह्येष तदा भवतित्युऽएवाधियज्ञम् ।।६।। यदेतन्मण्डलं तपति यश्चैष रुक्मऽइदं तच्छुल्क मक्षन्नथ यदेतदर्चिर्द्दीप्यते यच्चैतत्पुष्करपर्णमिदं

तत्कृष्णमक्षन्नथयऽएषऽएतस्मिन्मण्डले पुरुषो यश्चैष हिरण्मय ꣳ पुरुषो यमेव सयोयं दक्षिणेक्षन्पुरुषः।।७।। सऽएषऽएवलोकं पृणतामेव सर्वोग्निरभिसम्पद्यते तस्मै तन्मिथुनं यो ꣳ सच्येक्षन् पुरुषोर्न्द्ध महतदात्मनो यन्मिथुनं यदा वै सह मिथुनेनाथ सर्वोथ कृत्स्नः कृस्नतायैतद्यत्ते द्वै भवतो द्वन्दः हि मिथुनम्प्रजनन तस्मा द्वे द्वे लोकंपृणेऽउपधीयेते तस्मा दुद्वाभ्यां द्वाभ्यां चितिम्प्रणयन्ति ।।८।। सऽएषऽएवेन्द्र। योयं दक्षिणेक्षन् पुरुषोयमिन्द्राणी ताभ्यां देवाऽएतां विघृतिमकुर्वन्ना-सिकान्तस्मा ज्जायाया अन्ने नाश्नीयाद्वीर्यवान्हास्माज्जायते वीर्यवन्तमुह सा जनयति यस्याऽअन्ते नाश्नाति ।।९।। तदेतद्देवव्रत ꣹ राजन्यबन्धवो मनुष्याणामनुत्तमां गोपायन्ति तस्मादु तेषु वीर्यवाज्जायते मृतवाका बयसा ꣳ साक्षिप्रश्येनं जनयति ।।१०।। तौहृदयस्याकाशं प्रत्यवेत्य मिथुनीभवतस्तौ यदामिथुनस्यान्तङ्गच्छ-तोथ है तत्पुरुषः स्वपिति तद्यथा हैवेदम्मानुषस्य मिथुनस्यान्तङ्गत्वा संविदऽइव भवत्येव ठ० हैवैतद संविदऽइव भवति दैव ठ० ह्येतन्मिथुनम्परमो



ह्यैषऽआनन्दः।।११।। तस्मादेवं वित्स्वप्यात् । लोक्य ꣳ है तेऽएव तदेवते मिथुनेन प्रियेण धाम्ना समर्द्धयति तस्मादुह स्वपन्तं धुरेव नबोधयेन्नेदेते देवते मिथुनी भवन्त्यौ हिनसानीति तस्मादुहैतत्सुखपुरुषः श्लेष्मणमिव मुखं भवत्येतेऽ एवं तद्देवते रेतः सिञ्चतस्तत्मुत- स्माद्रेतसऽइद ꣳ सर्व ꣳ सम्भवति यदिदं किञ्च ।।१२।। सऽएषऽएव मृत्युः। यऽएष एतस्मिन्मण्डले पुरुषो यश्चायन्दक्षिणे-क्षन्पुरुषस्तस्य हृदये पादावतिहतौ तौ हैतदाच्छिद्योत्क्रामति स यदोत्क्रामत्यथ हैतत्पुरुषो म्रियते तस्मादुहै तत्प्रेतमाहुराच्छेद्यस्येति ।१३। एषऽउऽएव प्राणः। एष हीमाः सर्वाः प्रजाः प्रणयति तस्यैते प्राणाः स्वः स यदा स्वपिथैनमेते प्राणाः स्वाऽअपियन्ति तस्मात्स्वाप्यथः स्वाप्ययो ह वैत ꣹ स्वप्नऽइत्याचक्षते परोक्षत्परोक्षकामा हि देवाः।।१४।। सऽएतैः सुप्तोन कस्य चन वेदन मनसा सङ्कल्पयति नवाचान्नस्य रस विजानाति न प्राणेन गन्धं व्विजानाति न चक्षुषा पश्यति नश्रोत्रेणशृणोत्येत

छंह्येतेतदापीता भवन्ति सऽएषऽएकः संप्रजासु बहुधा व्याविष्टस्तस्मादेकासती लोकम्पृणा सर्वमग्निमनुव्विभ- वत्यथयदेका यदेकऽएव तस्मादेकः ।१५। तदाहुऽएकोमृत्युर्बहवऽइत्येकश्च बहवश्चेति ह ब्रूयाद्यदिहासायमुत्र तेनैकोथ यदिह प्रजासु बहुधा व्याविष्टस्तेनो बहवः।।१६।। तदाहुःऽअन्तिके मृत्युर्दूराऽत्यान्तिके च दूरे चेतिह ब्रूयाद्यदहायमिहाध्यात्मन्तेनान्तिकेथ वदसावमुत्र ते नो दूरे ।।१७।। तदेषश्लोको भवति। अन्ये भात्यश्रितो रसाना छं संक्षरेमृतऽइति यदेतन्मण्डलं तपति तदन्नमथ यऽएषऽएतस्मिन्मण्डले पुरुषःसोत्ता सऽएतस्मिन्नन्नेपश्रितो भातीत्याधिदेवतम् ।।१८।। *अथाध्यात्मम्-* इदमेव शरीरमन्नमथ योयं दक्षिणेक्षन्पुरुषः सोत्ता सऽएतस्मिन्नन्नेपक्षितो भाति ।।१९।। तमेतमग्निरित्य-ध्वर्यवऽउपासते । यजुरित्येष हीदः सर्वं युनक्ति सामेति छन्दोगाऽएतस्मिन्हीद छं सर्वः समानमुक्थमिति बह्व चाऽएष हीद छं सर्व्वं मुत्थापयति यातुरिति यातुविदऽएतेन



हीद छं सर्वं यतं विश्वमेति सर्पाह सर्प्प ऽ इति सर्प्प वि एतेन हीदः सर्प्पविद ऽ ऊर्गिती देवा रयिरिति मनुष्या मायेत्यसुराः स्वधेति पितरो देवजन इति देवजनविदो रूपमिति गन्धर्वागन्धऽ इत्यप्सरसस्तं यथा यथोपासते तदेव भवति तद्वै नान भूत्वावति तस्मादेनमे वित्सर्वै रेवेतै रूपासीत सर्व्वं छं है तद्भवति सर्व्वं छं हैन मे तद्भूत्वाऽ वति ।।२०।। सऽएष त्रिष्टकोग्निर्ऋगेका यजुरेका सामैका तद्याङ्काञ्चात्र-र्चोपदधाति रूक्म ऽ एव तस्याऽआयतनमथ या यजुषा पुरुष ऽ एव तस्या ऽ आयतनमथ यां छं साम्ना पुष्कर पर्णमेव तस्या ऽ आयतनमेवं त्रीष्टकः ।।२१।। सऽ तेवाएते ऽ उभे ऽ एष च रुक्मऽएतच्च पुष्करपर्णमेतम्पुरुषमपीतऽउभे ह्यक्सामे यजुरपितऽएवम्वेकेष्टकः ।।२२।। सऽएषऽएव मृत्त्युः सऽएषऽएतस्मि-न्मण्डले पुरुषो यश्चाय दक्षिणेक्षन्पुरुषः सऽएषऽ एवंविदऽ आत्मा भवति स यदेवंविदस्माँल्लोकात्प्रैत्त्यथैतमेवात्मानमभिसम्भति सोमृतो भवति मृत्युर्ह्यस्यात्मा

भवति ।।२३।। तेन वा इदमग्ने सदासीन्नैव सदासीत् ।। इति मण्डल ब्राह्मणम्।।

*अथ रक्षाबन्धनपूजा* - यव, दूर्वा, सर्षप, चन्दन, गोमय, दधि सहितां रक्षां ताम्रपात्रे निधाय पात्रं स्पृशन्नारायणकवचं पठेत् ॐ पूर्वे रक्षतु गोविन्द आग्नेय्यां धरणीधरः। याम्यां रक्षतु वाराहो नारसिंहस्तु नैर्ऋते ।।१।। वारुण्यां केशवोरक्षे-द्वायव्यां मधुसूदनः। उत्तरे श्रीधरो रक्षेदैशान्यां तु गदाधरः ।।२।। ऊर्ध्वं गोवर्द्धनो रक्षेदधस्तात्तु महीश्वरः ।। एवं दश दिशो रक्षेद्वासुदेवो जनार्दनः ।।३।। यज्ञाग्रे रक्षाताच्छङ्ख पृष्ठे वै पद्ममुत्तमम् ।। वामपार्श्वे गदारक्षेद्दक्षिणे तु सुदर्शनः ।।४।। उपेन्द्रः पातु ब्रह्माणमाचार्यं पातु वामनः ।। ऋग्वेदमच्युतो रक्षेद्यजुर्वेदमधोक्षजः।।५।। कृष्णो रक्षतु सामानमथर्वाणञ्चमाधवः । उपविष्टांश्च विप्रांस्ताननिरुद्धोऽभिरक्षतु।। यजमानं सपत्नीकं पुण्डरीकाक्ष रक्षतु ।।६।। रक्षाहीनं च यत्स्थानं तत्सर्वं रक्षताद्धरिः। वेदमन्त्रैश्च कर्त्तव्यारक्षाशुभ्रैस्तु सर्षपैः ।।७।। कृत्वा पोटलिकां पूर्वं बध्नीयाद्दक्षिणे



करे । इति।। ततो वक्ष्यमाणमन्त्रैः पूजयेत् ॐ रक्षोहणंव्वलगहनंव्वैष्णवीमिदमहन्तं-व्वलगमुत्किरामियम्मेनिष्ट्योयममात्योनिचखानेदमहन्तंव्वलगमुत्किरामियम्मे-समानोयमसमानोनिचखानेदमहन्तंव्वलगमुत्किरामियम्मेसमानोयमसमानोनिचखानेद महन्तंव्वलगमुत्किरामियम्मेसबन्धुर्य्यमसबन्धुर्निचखानेदमहन्तंव्वलगमु त्किरामियम्मे-सजातोयमसजातोनिचखानोत्कृत्याङ्किरामि ।।१।। ॐ स्वराडसिसपत्नहा सत्रराडस्यभिमातिहानराडसिरक्षोहासर्व्वराडस्यमित्रहा ।।२।। ॐ रक्षोहणोव्वल-गहनः प्रोक्षामिव्वैष्णवान्त्रक्षोहणोव्वोवलगहनोवनया मिव्वैष्णवान्त्रक्षोहणौ-वोव्वलगहनाऽ उपदधामिव्वैष्णवीरक्षोहणौवांव्वलगहनोपर्य्यू हामिवैष्णवीवैष्णव-मसिवैष्णवास्त्थ ।।३।। ॐ सप्तऽऋषयः प्रतिहिताः शरीरेसप्तरक्षन्तिसदम-प्रमादम् ।। सप्ताषः स्वपतोलोकमीयुस्तत्रजाग्रतोऽअस्वप्नजौसत्रसदौचदेवौ ।।४।। इति रक्षाबन्धनपूजा।।

० ० ०

## यज्ञोपवीत धारण मन्त्रः

यज्ञोपवीतं हस्ते गृहीत्वा गङ्गाजलेन सेचानानन्तरं पठन् - ॐ यज्ञोपवित्रम्परमम्पवित्रम्प्रजापतेर्यत्सहजम्पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीम्बलमस्तु तेजः।। ॐ यज्ञोपवीतमसि यज्ञस्यत्वा यज्ञोपवीतेनोपनह्यामि इति मन्त्रेण धारयेत् । जीर्ण यज्ञोपवीतम् - एतावद्दिनपर्यन्तं ब्रह्मत्वं धारितं मया। जीर्णत्वात्त्वा परित्यागो गच्छ सूत्र यथा सुखम् । इत्युक्त्वा शिरोदेशे त्यजेत्, गायत्रीं च श्रावयेत्।

## रक्षा बन्धन

येन बद्धो बलीराजा दानवेन्द्रो महाबल । तेन त्वां प्रति बध्नामि रक्षो मा चल मा चल।।



## षोडशोपचार देवपूजनविधिः

दीप-कलश-गणेश पूजनानन्तरं प्रतिज्ञा सङ्कल्पं कुर्यात् तत्पश्चात् पूजामारभ्य-

*आवाहन* - आगच्छ भगवन् देव स्थाने चात्र स्थिरो भव । यावत् पूजां करिष्यामि तावत्त्वं सन्निधौ भव ।।

*प्रतिष्ठा* - अस्यैः प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च । अस्यै देवत्वमर्चायैमामहेति च कश्चन ।

*आसनम्* - रम्यं सुशोभनं दिव्यं सर्वसौख्यकरं शुभम् । आसनञ्च मया दत्तं गृहाण परमेश्वर । (आसनं समर्पयामि)।

*पाद्यम्* - उष्णोदकं निर्मलं च सर्वसौगन्ध संयुतम् । पादप्रक्षालनार्थाय दत्तं ते प्रतिगृह्यताम् । (पाद्यं स०) ।।

*अर्घ्यम्* - अर्घ्यं गृहाण देवेश गन्धपुष्पाक्षतैः सह । करुणाकर मे देव

गृहाणार्घ्यं नमोऽस्तुते । (अर्घ्यं स०) ।।

*आचमनम्* - सर्वतीर्थसमायुक्तं सुगन्धिनिर्मलं जलम् । आचम्यतां मयादत्तं गृहीत्वा परमेश्वर (आचमनीयं सं०) ।।

*स्नानम्* - गङ्गासरस्वतीरेवा पयोष्णीनर्मदाजलैः । स्नापितोऽस्मि मया देव तथा शान्तिं कुरुष्व मे । (स्नानं स०) ।।

*दुग्धस्नानम्* - कामधेनुसमुत्पन्नं सर्वेषां जीवनं परम् । पावनं यज्ञहेतुश्च पयः स्नानार्थमर्पितम् । (दुग्ध स्नानं स०) पुनर्जलस्नानं स० ।।

*दधिस्नानम्* - पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम् । दध्यानीतं मया देव स्नानार्थं प्रातिगृह्यताम् । (दधि स्नानं सं०)।।

*घृतस्नानम्* - नवनीत समुत्पन्नं सर्वसन्तोषकारकम् । घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम् । (घृत स्नानं स०)।।

*मधुस्नानम्* -तरुपुष्पसमुद्भूतं सुस्वादु मधुरं मधुः। तेजः पुष्टिकरं दिव्यं स्नानार्थं



प्रतिगृह्यताम् । (मधुस्नानं स०)।।

*शर्करा स्नानम्* - इक्षुसारसमुद्भूता शर्करा पुष्टिकारिका । मलापहारिका दिव्या स्नानार्थं प्रतिगृह्यताम् । (शर्करा स्नानं सं०) ।।

*पञ्चामृत स्नानम्* - पयोदधिघृतं चैव मधु शर्करयायुतम् । पञ्चामृतं मयानीतं स्नानार्थं प्रतिगृह्यताम् । (पञ्चामृत स्नानं स०) ।।

*शुद्धोदक स्नानम्* - मन्दाकिन्यास्तु यद्वारि सर्वपापहरं शुभम् । तदिदं कल्पितं देव स्नानार्थं प्रतिगृह्यताम् । (शुद्धोदक स्नानं स०) ।।

*वस्त्रम्* - सर्वभूषादिके सौम्ये लोकलज्जानिवारणे । मयोपपादिते तुभ्यं वाससी प्रतिगृह्यताम् । (वस्त्रोपवस्त्रं स०)।

*यज्ञोपवीतम्* - नवभिस्तन्तुभिर्युक्तं त्रिगुणं देवतामयम् । उपवीतं मयादत्तं गृहाण परमेश्वर । (यज्ञोपवीतं स०)।

*गंधम्* - श्रीखण्डचन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् । विलेपनं सुरश्रेष्ठं चन्दनं प्रतिगृह्यताम् । (गन्धम् स०) ।

*कुंकुम (रोली)* - कुंकुमं कामनादित्वं कामना कामसंभवम् । कुंकुमेनार्चितो देव गृहाण परमेश्वर । (कुंकुमं स०) ।

*अक्षताम्* - अक्षतांश्च सुरश्रेष्ठ कुंकुमाक्ताः सुशोभिताः । मया निवेदिताभक्त्या गृहाण परमेश्वर । (अक्षतान् स०) ।

*पूष्पम्* - माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो। मयाहृतानि पुष्पाणि गृहाण परमेश्वर । (पुष्पाणि स०) ।

*पुष्पमाला* - सुरभिपुष्पनिचयैः ग्रथितां शुभमालिकां । ददामि तव शोभार्थं गृहाण परमेश्वर । (पुष्पमालां स०) ।

*दूर्वा* - त्वं दूर्वेऽमृतजन्मासि वन्दितासि सुरैरपि । सौभाग्यसन्ततिं देहि



सर्वकार्यकरी भव (दुर्वा स०) ।

*शमीपत्र*- शमीशमयते पापं शमी लोहितकण्टकी । धारिण्यर्जुनबाणानां रामस्य प्रियवादिनी । (शमीपत्रं स०)।

*सिन्दूरम्* - सिन्दूरं शोमनं रक्तं सौभाग्यं सुखवर्धनम् । शुभदं कामदं चैव सिन्दूरं प्रतिगृह्यताम् । (सिन्दूर स०) ।

*सौभाग्यद्रव्यं*- हरिद्रां कुंकुमं चैव सिन्दूरं कज्जलान्वितम् । सौभाग्यद्रव्य-संयुक्तं गृहाण परमेश्वर । (सौभाग्यद्रव्याणि स०)।

*अबीर गुलाल*- अबीरं च गुलालं च चोवाचन्दनमेव च । अबीरेणार्चितो देव ततः शान्तिं प्रयच्छमे । (अबीरं गुलाल स०)।

*आभूषणम्* - अलङ्कारान् महादिव्यान्नानारत्नैर्विनिर्मितान् । गृहाण देव देवेश प्रसीद परमेश्वर । (आभूषणं स०) ।

*धूपम्* - वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः । आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् । (धूपमाघ्रापयामि) ।

*दीपम्* - साज्यं च वर्तिसंयुक्तं वह्निना योजितं मया । दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम् । (दीपं दर्शयामि) ।

*नैवेद्यम्* - शर्कराघृतसंयुक्तं मधुरं स्वादु चोत्तमम् । उपहारसमायुक्तं नैवेद्यं प्रतिगृह्यताम् ।। (नैवेद्यं निवेदयामि) ।

*आचमनम्* - गङ्गाजलं समानीतं सुवर्णकलशे स्थितम्। आचम्यतां सुरश्रेष्ठ शुद्धमाचमनीयकम् (आचमनीयं स०) ।

*ऋतुफलम्* - नारिकेलफल जम्बूफल नारङ्गमुत्तमम् । कुष्माण्ड पुरतो भक्त्या कल्पितं प्रतिगृह्यताम् । (ऋतुफल स०) ।

*अखण्ड ऋतुफलम्* - इदं फलं मया देवस्थापितं पुरतस्तव । तेन मे सफलावाप्ति-



र्भवेज्जन्मनिजन्मनि । (अखण्डऋतुफल०) ।

*ताम्बूलपूगीफलम्* - पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् । एलाचूर्णादि संयुक्तं ताम्बूलं प्रतिगृह्यताम् । (ताम्बूलं पूगीफलं स०) ।

*दक्षिणा*- हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे । (दक्षिणां स०)।

*आरती* - चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च । त्वमेव सर्व ज्योतिषिं आर्तिक्यं प्रतिगृह्यताम् ।

*प्रार्थना* - गजाननं भूतगणादिसेवितं कपित्थजम्बूफलचारुभक्षणम् । उमासुतं शोकविनाशकारकं नमामि विघ्नेश्वरपादपङ्कजम् ।। अनया पूजया गणपतिः प्रीयतां न मम ।।

० ० ०

# ब्राह्मणलक्षणं तथा धर्मलक्षणञ्च

शान्ताः सन्तः सुशीलाश्च सर्वभूतहिते रताः ।
क्रोधं कर्तुं न जानन्ति एतद्ब्राह्मणलक्षणम् ।।
सन्ध्योपासनशीलश्च सौम्यचित्तो दृढव्रतः ।
समः परेषु च स्वेषु एतद् ब्राह्मणलक्षणम् ।।
एकाहारश्च सन्तुष्टः स्वल्पाशी स्वल्पमैथुनः ।
ऋतुकालाभिगामी च एतद्ब्राह्मणलक्षणम् ।।
परान्नं परवित्तं च पथि वा यदि वा गृहे ।
आदत्तं नैव गृह्णाति एतद्ब्राह्मणलक्षणम् ।।



सत्यं ब्रह्म तपो ब्रह्म, ब्रह्मचेन्द्रियनिग्रहः ।
सर्वभूतदया ब्रह्म एतद्ब्राह्मणलक्षणम् ।।
योगस्तपो दमो दानं सत्यं शौचं दया श्रुतम् ।
विद्या विज्ञानमास्तिक्य एतद् ब्राह्मण लक्षणम् ।।
शौचमास्तिक्यमभ्यासो वेदेषु गुरुपूजनम् ।
प्रियातिथिन्वमिज्या च ब्रह्मकायस्य लक्षणम् ।।
सम्पतन्मोहजालेषु कदाचिदिह मानुषे ।
ब्राह्मण्यं लभते जन्तुस्तत्पुत्र परिपालय ।।
अग्निहोत्रं तपः सत्यं वेदानां चैव पालनम् ।
आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते ।।
वेदे तथात्मज्ञाने च ब्राह्मणो यत्नवान् भवेत् ।
एष धर्मस्य सर्वस्य चतुर्वर्गस्य साधकः ।।

श्रुतिः स्मृतिश्च विप्राणां नयने द्वे विनिर्मिते ।
एकेन विकलः काणो द्वाभ्यामन्धः प्रकीर्तितः ।।
वेदं गृहीत्वा यः कश्चिच्छास्त्रं चैवावमन्यते ।
स सद्यः पशुतां याति सम्भवानेकविंशतिम् ।।
उक्तं च प्रतिसिद्धं च पुनः सम्भावितं तथा ।
सापेक्षं निरपेक्षं च ऋषिवाक्यमनेकधा ।।
यज्ञानां तपसां चैव शुभानां चैव कर्मणाम् ।
वेद एव द्विजातीनां निःश्रेयसकरः पर ।।
श्रुतिस्मृतिसमं पुण्यं पापनाशनमुत्तमम् ।
चिन्तयेद् ब्राह्मणो भक्त्या धर्मसंस्थापनाय च ।।

० ० ०

।। इति ।।

# ऋषितर्पणी पूजा - विधिः

## (श्रावणी)

प्रकाशक :-

**श्री दुर्गा साहित्य भण्डार**

पो० बा० नं० १०९६, नेपाली खपड़ा, वाराणसी-१

मूल्य : भा. रु. २०/-

मुद्रक : त्रिमुर्ती प्रिण्टर्स, सरस्वती फाटक, वाराणसी-१